# मिलिये सुपरफ़ाइटर्स से!






मैदान पर सुनील गावस्कर की रग-रग में फड़कता है मुकाबले का जोश.

तभी तो दुनिया उन्हें 'सुपरबैट्समैन' कह कर पुकारती है. पर सुनील गावस्कर कहते हैं – "मैं तो सुपरफ़ाइटर हूँ और मैं अपने बेटे को भी बनाऊँगा सुपरफ़ाइटर. तभी तो मैं उसे बचपन से ही सही दाँव-पेंच सिखा रहा हूँ. जैसे दाँतों की देखभाल के लिये फ़ोरहॅन्स फ़्लोराइड—सड़न के खिलाफ़ सुपरफ़ाइटर."

कीटाणु भोजन के कणों पर असर करते हैं और ऐसे एसिड पैदा करते हैं, जिनसे सड़न शुरू होती है. फ़ोरहॅन्स के सुपरफ़ाइटर में असरकारक फ़्लोराइड है जो दाँतों का इनेमल मज़बूत करके एसिड के हमले को रोकता है.

और फ़ोरहॅन्स का अनोखा एस्ट्रिंजेंट मसूड़ों को कस कर दाँतों को मज़बूत आधार देता है, बरसों बरकरार रहने के लिये.

सुनील साहब और कुछ?

"मैं अपने बेटे को देता हूँ फ़ोरहॅन्स सुरक्षा. आप?"



**फ़ोरहॅन्स**

३२ बरकरार

GM-113/86 Hn

# व्यवहारतः नूतनशब्दसिद्धिः

शिष्यः – श्रीमन्! "यथा घटेन कार्यं करिष्यन् कुम्भकारकुलं गत्वा आह– कुरु घटं, कार्यम् अनेन करिष्यामि इति, न तद्वत् शब्दान् प्रयुयुक्षमाणः वैयाकरणकुलं गत्वा आह– कुरु शब्दान् प्रयोक्ष्ये इति।"

आचार्यः– किं, महाभाष्यम् अपि आघ्रातम् इव भवता!

शि –आचार्य, न मया महाभाष्यम् अवलोकितम्। यतो हि अहं बालः। आरम्भे स्तरे अध्ययनं कुर्वन् अस्मि....।

आ – अस्तु तावत्, केन उद्देशेन एतत् वाक्यम् उद्धृतम्?

शि –गतसप्ताहे कश्चन संस्कृतज्ञः पूर्वोक्तं वाक्यम् उदाहृत्य माम् उक्तवान्– "भोः, नूतनशब्दनिर्माणम् इति भवन्तः चिन्तयन्ति। किन्तु किमर्थं तथा शब्दाः निर्मातव्याः? व्यवहारेण एव ते रूढौ आगच्छन्ति किल?" इति।

आ – तेन येन केनापि अभिप्रायेण एतत् उक्तं स्यात् नाम। किन्तु एकः तु सत्यांशः अस्ति तत्र – 'केवलं शब्दनिर्माणतः प्रयोजनं नास्ति' इति। अस्मत्पूर्वजाः अपि एतत् जानन्ति स्म। ते अपि भवता उद्धृतम् एव महाभाष्यवाक्यम् उद्धरन्ति स्म। किन्तु ते एव स्वप्रतिभानुगुणं बहून् शब्दान् निर्मितवन्तः, प्रकाशितवन्तः च। अन्ते 'लोकः मम प्रयत्नं न परिचिनोति, जनाः मां, मम पाण्डित्यं, परिश्रमं च उपेक्षन्ते' इति वदन्तः मौनं स्थितवन्तः।

शि –एतत् सत्यम् एव। व्यावहारिकशब्दानां सङ्ग्रहरूपः कोषः तत्र तत्र उपलभ्यते। तदस्तु, तर्हि एवं शब्दनिर्माणेन प्रयोजनं नास्ति इति वा भवतः अभिप्रायः?

आ –तथा कथं वक्तुं शक्यते? यत्र व्यवहारशीलाः भवन्ति तत्र तेषाम् उपयोगार्थं केचन शब्दाः निर्मातव्याः एव। अन्यथा आंग्लादिशब्दान् एव ते प्रत्ययादिसंयोगेन उपयुज्य व्यवहारं कुर्युः, यच्च संस्कृतप्रकृतिविरुद्धं भवति। न हि अत्र ते व्यवहारशीलाः दोषभागिनः। यतः ते न जानन्ति, अतः ते तथा कुर्वन्ति। व्यवहारशीलानां साहाय्यम् आचरणीयम् इति एतत् तु जानता कर्तव्यम्।

शि –तर्हि 'व्यवहारतः नूतनशब्दसिद्धिः' इत्यस्य कः अर्थः अवशिष्टः?

आ – किमर्थं तथा चिन्तयति? मम कथनस्य तात्पर्यं तु – ये पण्डिताः भवन्ति ते अपेक्षायां सत्यां तदा तदा व्यवहारशीलानां साहाय्यम् आचरेयुः इति। एतस्य अर्थः– यथा आंग्लभाषायां वदन्ति Spoon feeding इति, तथा करणीयम् इति, प्रतिकवलं ब्रह्मार्पणम् इति वक्तव्यम् इति वा न।

शि –उदाहरणम्?

आ – मया पूर्वं कदाचित् उक्तम् आसीत्– 'नूतनशब्दचिन्तनं भारतीयानां रक्तेषु सहजतया प्रवहति' इति। एषा प्रवृत्तिः अत्र उपकरोति। एकं प्रधानं शब्दं सूचयामः चेत् अवान्तरभेदान्, तत्सम्बन्धिशब्दान् वा जनाः एव स्वयं चिन्तयिष्यन्ति। अत्र अनुभवः एव अस्माकं प्रमाणम्।

गतवर्षत्रयस्य परिशीलनेन वदामि– पूर्वं Needle– सूची इति एकः शब्दः आसीत्। इदानीं तु महासूची – Bodkin, पत्रसूची – Pin, केशसूची – Hair pin, यन्त्रसूची – Sewing machine needle, इत्यादयः शब्दाः व्यवहारे दृश्यन्ते। एतेषु सर्वेषु अपि शब्देषु औचित्यं दृश्यते एव।

अन्यां सरणिं पश्यतु – मुख्यमार्गः – Main road, उपमार्गः – Cross road, राजमार्गः – High-way, पादमार्गः – Foot track, पादपथः – Foot-path, एकमुखमार्गः – One way इत्यादयः शब्दाः व्यवहारतः एव आगताः। कोऽपि पण्डितः टङ्कशालायां नाणकानि इव एकत्र उपविश्य एतान् न टङ्कितवान्। व्यवहारशीलाः एव तत्तत्सन्दर्भे चिन्तितवन्तः, जानन्तं पृष्टवन्तः, पुनः परिशीलितवन्तः, व्यवहारं कृतवन्तः। अथवा इतरेषां व्यवहारं दृष्ट्वा वा स्वव्यवहारे आनीतवन्तः स्युः अपि। कथम् अपि एते व्यवहारे आगताः। अतः व्यवहारतः बहवः शब्दाः सिध्यन्ति इति तु सत्यम् एव।

शि –एवं तर्हि अशुद्धाः शब्दाः अपि व्यवहारे आगच्छेयुः किल? सामान्याः साधुत्वविषये किम् अधिकं जानन्ति?

आ – आम्। तादृशानां परिष्कारः पण्डितानां दायित्वम्। ये शब्दाः व्यवहारे दृश्यन्ते तेषाम् औचित्यविषये शुद्धताविषये च ते निरन्तरं चिन्तयेयुः। साधून् युक्तान् शब्दान् ते ज्ञापयेयुः।



# चन्दमामा

मे-१९८७

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. २-५०
वार्षिकं ग्राहकशुल्कं रू. ३०-००




# चन्दमामा

संस्थापक:– 'चक्रपाणि:' सञ्चालक:– 'नागिरेड्डी'

संस्कृते यथा तर्कशास्त्रं, व्याकरणशास्त्रं, गणितशास्त्रं, वैद्यकीयशास्त्रं, साहित्यशास्त्रम् इत्यादीनि शास्त्राणि सन्ति,तथैव इतरभाषासु अपि बहूनि शास्त्राणि सन्ति। किन्तु वैपरीत्यं यत् इतरभाषासु गहनातिगहनाः अपि विषयाः सामान्यया शैल्या निरूपिताः भवन्ति चेत् संस्कृते प्रायः सर्वम् अपि कठिनशैल्या भवति। व्याख्यानं विना तेषाम् अवगतिः क्लेशकरी एव। कुत्रचित् एवं भवति – मूलस्य व्याख्यानम् अपि व्याख्यानम् अपेक्षते! उदाहरणम् अत्र प्रदर्शनीयं नास्ति, यतः तादृशानि कठिनानि व्याख्यानानि बहूनि दृश्यन्ते।

वस्तुतः शास्त्रस्य विषयः सर्वदा गहनः एव भवति। तस्य ज्ञानार्थं विशेषपरिश्रमः करणीयः। एतन्मध्ये यदि भाषाक्लेशः अपि आपतति तर्हि सहजतया प्रवृत्तौ अनुत्साहः दृश्यते। कदाचित् ग्रन्थस्य भाषाकाठिन्यम् अपि विषये आरोप्यते।

'गहनाः विषयाः सरलया शैल्या न निरूपणीयाः' इति कुत्रापि नास्ति। यदि इच्छा स्यात् तर्हि गहनोऽपि विषयः समनोहरं सविस्तरं च निरूपयितुं शक्यते। यत्ने कृते किम् असाध्यम्? एवं कृतं चेत् शास्त्रेषु बहूनां प्रवृत्तिः भवेत्। बहूनां प्रवेशेन शास्त्रं वर्धते, यतः नूतनाः विषयाः तत्र कालान्तरे प्रस्तुताः भवन्ति।

सम्पुटः - ३ मे-८७ सञ्चिका - २

प्रतिकृतिमूल्यं रू. २-५० * वार्षिकं ग्राहकशुल्कं रू. ३०-००

रसप्रश्नाः

# गुरुशिष्यपरम्परा

(भारतीये इतिहासे गुरुशिष्याणाम् एका विशिष्टा परम्परा अस्ति। कुत्रचित् गुरोः नामबलेन शिष्यः प्रसिद्धिं गतः। अन्यत्र कुत्रचित् शिष्यस्य प्रसिद्धेः कारणतः गुरोः अपि ख्यातिः। अधः 'अ' भागे शिष्याः, 'ब' भागे गुरवः च निर्दिष्टाः सन्ति। शिष्यं गुरुणा योजयन्तु।)

| 'अ' | 'ब' |
| --- | --- |
| १. एकलव्यः | १. गोविन्दभगवत्पादः |
| २. कौत्सः | २. रामकृष्णपरमहंसः |
| ३. रामकृष्णपरमहंसः | ३. धौम्यः |
| ४. चन्द्रगुप्तः | ४. भीष्मः |
| ५. कृष्णः | ५. तोतापुरी |
| ६. उद्दालकः | ६. यमः |
| ७. कचः | ७. वरतन्तुः |
| ८. परशुरामः | ८. वाल्मीकिः |
| ९. विवेकानन्दः | ९. व्यासः |
| १०. शङ्कराचार्यः | १०. वर्षाचार्यः |
| ११. नचिकेताः | ११. चाणक्यः |
| १२. वैशम्पायनः | १२. द्रोणः |
| १३. लवः कुशः च | १३. समर्थरामदासः |
| १४. पाणिनिः | १४. शुक्राचार्यः |
| १५. छत्रपतिः शिवाजी | १५. सान्दीपनः |

उत्तराणि–

१–१२. २–७. ३–५. ४–११. ५–१५. ६–३. ७–१४. ८–४. ९–२.
१०–१. ११–६. १२–९. १३–८. १४–१०. १५–१३.



# रसवार्ताः



## महोष्णता, या सूर्यमण्डले अपि नास्ति!

सूर्यमण्डले यावती उष्णता भवति ततोऽपि दशगुणिताधिकाम् उष्णताम् उत्पादितवन्तः सन्ति विज्ञानिनः। न्यूजर्सियाप्रदेशस्थायां प्लाम्सा फिसिक्स् प्रयोगशालायां विज्ञानिनः प्रयोगविशेषेण २०० मिलियन् 'तापयुक्तां सेल्शियस् उष्णताम् उत्पाद्य नूतनं विक्रमं साधितवन्तः।

## अपूर्वा स्मरणशक्तिः!



दूरवाणीविनिमयकेन्द्रे कार्यं कुर्वाणा विंशतिवर्षीया चीनदेशीया गोव् याकिंग् दशनगरसम्बन्धिन्यः १५,००० दूरवाणीसङ्ख्याः कण्ठस्थीकृतवती अस्ति। बीजिङ्गनगरे प्रेक्षकैः पृष्टाः सर्वाः सङ्ख्याः वदन्ती सा एकम् अपूर्वं कार्यक्रमम् आयोजितवती आसीत्। बीजिङ्ग्, डालियन्, हार्बिन्, पाङ्घे, टीयान्जिन् इत्यादिनगराणां सम्बन्धिन्यः दूरवाणीसङ्ख्याः निर्दिष्टम् उक्त्वा प्रेक्षकान् आनन्दाश्चर्यसागरे निमज्जितवती।



## बैकूयानम् एव गृहम् इव!

देहलीनगरीयः द्वादशकक्ष्यायाः विद्यार्थी सन्दीपकुमारगुप्ता कांश्चन मासान् यावत् श्रद्धया कार्यं कृत्वा बैकूयाने दूरदर्शकयन्त्रं, वि.सि.आर्. यन्त्रं, मिनि रिफ्रिजिरेटर्, कार्डलेस् टेलिफोन् इत्यादिकं च योजयित्वा यानम् एव गृहत्वेन सज्जीकृतवान्!

पुराणगाथावली–

# सत्यतपाः

कोसलदेशीयः देवदत्तः नाम ब्राह्मणः निस्सन्तानः। पुत्रभाग्यम् अपेक्षमाणः सः गोबिलऋषिं उद्गातृत्वेन नियोज्य एकं यज्ञम् आरब्धवान्। यज्ञसमये गोबिलस्य मन्त्रोच्चारणं स्वरबद्धं न आसीत्। एतं विषयं गोबिलं ज्ञापितवान् देवदत्तः। एतेन कुपितः गोबिलः– "मम मन्त्रोच्चारणे अपि दोषम् उद्घाटयतः भवतः कियत् औद्धत्यम्! एतस्य यज्ञस्य फलरूपेण जनिष्यमाणः भवतः पुत्रः महामूर्खः भवतु" इति शापं दत्तवान्।

"मम अपराधः क्षन्तव्यः" इति गोबिलस्य पादयोः पतित्वा प्रार्थितवान् देवदत्तः। शान्तः गोबिलः– "भवतः पुत्रः पाण्डित्येन मत्समानः न भवेत् चेत् अपि कवित्वेन कीर्तिं सम्पादयिष्यति" इति आशिषा अनुगृह्य ततः गतवान्।

अनन्तरकाले देवदत्तस्य पुत्रः जातः। विद्याभ्यासार्थं तं गुरुकुलं प्रेषितवान् देवदत्तः। किन्तु सः तत्र एकं मन्त्रम् अपि सस्वरम् उच्चारयितुं न शक्तवान्। एतत् दृष्ट्वा इतरे विद्यार्थिनः उपहसन्ति स्म। अपमाननं सोढुम् अशक्तः सः देवदत्तपुत्रः गुरुकुलं परित्यज्य गङ्गातीरे कुटीरं निर्माय, प्रतिदिनं भक्त्या श्रद्धया च गङ्गायां स्नानं कुर्वन्, सत्यकथनम् एव व्रतं मन्यमानः जीवति स्म। क्रमशः तस्य नाम सत्यतपाः इति प्रसिद्धं जातम्।

एकदा कश्चन व्याधः एकस्य वराहस्य अनुसरणं कृत्वा आगतवान्। धावन् आगतः सः वराहः सत्यतपसः कुटीरं प्राविशत्। किञ्चित्कालानन्तरं व्याधः तत्र आगत्य– "एतेन मार्गेण कोऽपि वराहः धावन् आगतः। सः कुत्र गतः इति भवान् जानाति वा?" इति पृष्टवान्।

सत्यतपाः असत्यं न वदति किल? किन्तु सत्यं वदति चेत् वराहस्य प्राणाः निर्गच्छन्ति। एवं धर्मसङ्कटे पतितस्य सत्यतपसः हृदये विषादच्छाया व्याप्ता। तदा तस्य मुखात्– "वराहस्य आगमनं नेत्राभ्यां दृष्टम्। किन्तु ते न वदतः। मुखं तु वक्तुं समर्थं, किन्तु न पश्यति" इत्यर्थकः छन्दोमयः श्लोकः निःसृतः। एतं श्लोकं श्रुतवतः व्याधस्य मनःपरिवर्तनं जातम्। सः मृगयावृत्तिम् एव परित्यक्तवान्। अनन्तरकाले सत्यतपाः महाकवित्वेन कीर्तिं प्राप्तवान्।





# वास्तविकः सज्जनः

विष्णवर्मा नाम राजा पूर्वं श्रीपुरं पालयति स्म। तस्य आस्थाने गौतमः नाम विदूषकः आसीत्। गौतमः स्वभावतः साधुः। कस्यापि दुर्गुणं वक्तुं न शक्नोति सः।

एकदा राजा गौतमेन सह उद्याने विहरन् वार्तालापमध्ये– "गौतम! मम विषये भवतः अभिप्रायः कः? निस्सङ्कोचं वदतु" इति उक्तवान्।

"महाराज! भवतः एतादृशी जिज्ञासा किमर्थम्? भवादृशः अन्यः अस्मिन् लोके नास्ति एव" इति उक्तवान् गौतमः।

गौतमस्य उत्तरेण विष्णवर्मणः तृप्तिः न जाता। सः पुनः अपि पृष्टवान्– "एतस्य भवतः वचनस्य अर्थः – मयि दुर्गुणाः सर्वथा न सन्ति इति, उत सन्देहः इति?" इति।

"भवति केन दुर्गुणः द्रष्टुं शक्येत महाराज? कस्यचित् विषये कोपः आगच्छति चेत् कठोरं निन्दति, सत्यम्। किन्तु भवतः मनः नवनीतसमम् इति अहं किं, सर्वेऽपि जानन्ति" इति गौतमः उक्तवान्।

विदूषकस्य वचनश्रवणेन महाराजस्य मनसि सन्देहः उत्पन्नः– "वस्तुतः सज्जनः नाम कथं भवेत्? वचनं कठिनं, मनः कोमलम् इत्यस्य कः अर्थः? मुखात् यत् कठिनं वचनं निस्सरति तत् मनसः काठिन्यवशात् एव कुतः न भवेत्? एतस्य सन्देहस्य परिहारः कथं लभ्येत?" इति।

तयोः वार्तालापः तत्रैव स्थगितः। किन्तु राजा तदेव सदा चिन्तयन् आसीत्। रात्रौ विरामसमये अपि चिन्तामग्नं महाराजं पृष्टवती राज्ञी– "किमर्थम् एवम् अस्ति भवान्? का चिन्ता भवतः? कोऽपि राजकीयः विचारः वा?" इति। राजा स्वकीयां समस्यां तस्यै निवेदितवान्।



"एतावान् एव वा समस्यायाः सारः? यः वचनैः व्यवहारेण वा अन्यं कदापि न पीडयति सः एव वस्तुतः सज्जनः। अत्र तावत् चिन्तनीयं किम् अस्ति?" इति पृष्टवती राज्ञी।

"राज्ञ्याः वचने सत्त्वम् अस्ति इति आलोचितवान् महाराजः। 'एवं तर्हि एतल्लक्षणानुगुणं राज्ये वास्तविकः सज्जनः यः भवति तस्मै पारितोषिकं दातव्यम्' इति सङ्कल्पितवान् सः।

एकदा सायङ्कालसमये राजा मन्त्री च वेषपरिवर्तनं कृत्वा सञ्चारार्थं प्रस्थितवन्तौ। 'बहूनां जनानाम् अभिप्रायानुसारं यः सज्जनः, तस्य दिनचरी कथं भवेत् इति ज्ञातव्यम्' इति तयोः विचारः। सर्वत्र विचारणेन ज्ञातं यत् आस्थानकविः आस्थानवैद्यः च जनानां दृष्ट्या सज्जनौ इति।

अतः तौ प्रथमम् आस्थानकवेः गृहं गतवन्तौ। गृहस्य पृष्ठतः स्थितम् उद्यानं प्रविश्य गृहस्य वातायनसमीपे निलीय स्थितवन्तौ।

तत्समये गृहस्य अन्तः आस्थानकविः उच्चध्वनिना कमपि तर्जयन् आसीत्। कुतूहलिनौ राजा मन्त्री च जागरूकतया अन्तः दृष्टिं प्रसारितवन्तौ।

अन्तः प्रकोष्ठे आस्थानकवेः पत्नी म्लानवदना सती एकत्र कोणे शयनं कृतवती आसीत्। तस्य शिष्यः गुरोः भोजनार्थं रजतस्थालिकाम् आनीय कवेः पुरतः स्थापितवान्। स्थालिकायाम् अल्पप्रमाणेन जलम् आसीत्।

एतत् दृष्ट्वा कुपितः कविः शिष्याय जलबिन्दून् प्रदर्शयन्– "भोः, कवित्वं नाम किमित्यपि स्पष्टम् अजानन्तं भवन्तं जनाः ममापेक्षया श्रेष्ठं यत् कथयन्ति, तेन भवान् उन्मत्तः जातः इति मन्ये। स्थालिकायां स्थितान् जलबिन्दून् अपि अपश्यन् भवान् किम् अन्धः? भवतः अपि नेत्रद्वयम् अस्ति, किन्तु कः लाभः?" इति तर्जयन् ताडनार्थं हस्तम् उन्नीतवान्।

शिष्यः भयेन कम्पमानः स्थालिकायां स्थितान् जलबिन्दून् मार्जितवान्। अत्रान्तरे कवेः पत्नीं वेदनाम् असहमाना किञ्चित् क्रन्दनं कृतवती इव।

तदा आस्थानकविः तां कोपेन पश्यन्–

"चतुर्णां दिनानां ज्वरेण एव एतावत् श्रान्ता वा? ज्वरः नाम किम् अदृष्टपूर्वः रोगः वा? किमर्थं तावत् क्रन्दनम्? मह्यं भोजनं यथा न रोचेत, रात्रौ अहं निद्रां यथा न प्राप्नुयां तथा करोति भवती। प्रायः पूर्वजन्मनि कृतस्य पुण्यस्य फलरूपेण भवती पत्नीत्वेन प्राप्ता मया। अहो दौर्भाग्यम्!" इति सम्यक् निन्दितवान्।

आस्थानकवेः नैजं स्वरूपं ज्ञातवन्तौ राजा मन्त्री च। अनन्तरं तौ ततः निर्गत्य आस्थानवैद्यस्य गृहं प्राप्तवन्तौ।

तत्र वैद्यस्य कुटीररूपायाः औषधशालातः कोऽपि ध्वनिः श्रूयते स्म। राजा मन्त्री च निश्शब्दं कुटीरसमीपं गत्वा वातायनद्वारा अन्तः दृष्टवन्तौ।

वैद्यस्य पुत्रः औषधमूलानां पेषणे मग्नः आसीत्। तस्य मुखे असमाधानस्य कोपस्य च छाया स्पष्टं दृश्यते स्म। वैद्यः तीक्ष्णदृष्ट्या पुत्रं पश्यन् आसीत्।

निमेषद्वयानन्तरं वैद्यः पुत्रं साग्रहम् उक्तवान्– "भोः, स्मरतु। पुत्रेण भवता मम वचनं पालनीयम् एव" इति।

तदा पुत्रः औषधपेषणं कुर्वन् एव– "तात! तत् मह्यं न रोचते। यत् मनः न अङ्गीकरोति तत् अहं कदापि न करोमि" इति उक्तवान्।

तदा कोपेन ज्वलन् आस्थानवैद्यः पुत्रम् उच्चैः उक्तवान्– "प्रतिवचनं वदति वा? वैद्यशास्त्रे मां भवान् अतिशेते इति अहं



जानामि। किन्तु अहं वदामि – एवं चेत् भवतः उद्धारः कदापि न भवति। महामूर्खः भवान् धनस्य मूल्यं न जानाति। श्वासकासरोगार्थम् अन्विष्टम् औषधं भवान् महाराजाय निवेदयति चेत् कः लाभः? तत् औषधं सर्वेभ्यः निश्शुल्कं दातुम् आदिशति महाराजः। किन्तु एतत् एव रहस्यरूपेण गोपयित्वा विदेशात् आगतं वणिजं वदामः चेत् तद्देशीयः राजा दशसहस्रं सुवर्णनाणकानि दास्यति। स्मरतु" इति।

एतत् श्रुत्वा राजा– "एतावन्नीचः वा आस्थानवैद्यः!" इति उद्गारं प्रकटयन् ततः गतवान्। मन्त्री तु किमपि उत्तरम् अयच्छन् महाराजम् अनुसृतवान्।

ततः गत्वा तौ समीपस्थस्य सरोवरस्य तीरे उपविष्टवन्तौ। समीपे एव ताभ्यां



तृणाच्छादितं कुटीरं दृष्टम्। तस्मात् कुटीरात् तदा तदा स्त्रियः बेदनापूर्णः आर्तध्वनिः श्रूयते स्म।

राजा मन्त्री च तस्य कुटीरस्य समीपं गतवन्तौ। अन्तः काचित् स्त्री मञ्चे शयिता आसीत्। तस्याः सङ्कटस्य कारणं प्रष्टुम् अग्रे गन्तुम् उद्युक्तः महाराजः। तत्समये कुटीरस्य द्वारम् उद्घाट्य कश्चित् अन्तः प्रविष्टवान्। तं दृष्ट्वा सा स्त्री 'हा हन्त! मम पादौ!' इति उच्चैः आक्रन्दनं कृतवती।

अन्तः यः आगतः सः तस्याः पतिः एव। तस्य नाम सोमनाथः। सः आदिनं कृषिक्षेत्रे कार्यं कृत्वा अतीव श्रान्त्या गृहं प्रत्यागतः आसीत्।

पत्न्याः सङ्कटपूर्णं ध्वनिं श्रुत्वा त्वरया समीपम् आगत्य "किं जातं नन्दिनि!" इति कातरपूर्णस्वरेण पृष्टवान् सोमनाथः।

"कूपतः जलम् आनेतुं गता अहं प्रत्यागमनसमये स्खलनेन मार्गे पतितवती। पादौ व्रणितौ। दक्षिणपादं तु उन्नेतुम् अपि न शक्नोमि। अतः अद्य चुल्ली अपि न ज्वालिता" इति वेदनया एव उक्तवती नन्दिनी।

सोमनाथः पत्नीविषये किञ्चिदपि कोपं न प्रदर्शितवान्। प्रत्युत महत्या अनुकम्पया प्रीत्या च तां सान्त्वयन्– "पाकस्य व्यवस्थाम् अहं पश्यामि। भवती तत्रैव शयनं करोतु। उष्णजलशाखेन प्रथमोपचारं करोमि। तेन श्वः प्रातःकालतः पूर्वं वेदना अपगता भवेत्। सर्वं सम्यक् भवति, भीतिः मास्तु" इति वदन् त्वरया चुल्लीं ज्वालितवान्।

अनन्तरम् उष्णजलं सज्जीकृत्य प्रथमोपचारेण पत्न्याः सेवां कृत्वा पाकं कृतवान्। पत्नीं भोजयित्वा स्वयम् अपि भुक्तवान्।

भोजनानन्तरं पत्नी पृष्टवती– "अद्य प्रत्यागमनार्थम् एतावान् विलम्बः किमर्थम्?" इति।

"शिष्टानि धान्यानि विक्रेतव्यानि आसन् खलु? क्रेतृभिः सह मूल्यविवादे एव समयः गतः। नगरतः आगतः कश्चित् वणिक् प्रतिगोणि पञ्च रूप्यकाणि अधिकं दातुं सिद्धः आसीत्। किन्तु तस्मै दानं मह्यं न

अरोचत। अन्ते ग्रामवणिजे एव सर्वं दत्तवान्'' इति उक्तवान् सोमनाथः।

''पञ्च रूप्यकाणि अधिकं दातुं सिद्धस्य नगरवणिजः वचनं किमर्थं तिरस्कृतवान्? एतेन अस्माकम् एव हानिः किल?'' इति पृष्टवती पत्नी।

सोमनाथः मन्दहासं प्रकटयन्— ''पञ्चानां रूप्यकाणां आशया अहं नगरवणिजे धान्यानि ददामि चेत् पार्श्वग्रामस्थानां जनानाम् एव हानिः भवेत्। अस्मिन् संवत्सरे धान्यसमृद्धिः विशेषतः नास्ति। एते नगरवणिजः लाभैकदृष्ट्या धान्यानि अन्यराज्यं प्रति प्रेषयन्ति। ग्रामीणाः वणिजः तथा न। अधिकमूल्येन न क्रीणन्ति चेदपि अन्याय्यं न आचरन्ति। योग्येन मूल्येन अत्रैव विक्रयणं करिष्यन्ति। अतः एव एवं कृतवान्'' इति उक्तवान्।

पत्युः वचनेन तृप्ता नन्दिनी— ''युक्तम् एव आचरितवान् भवान्'' इति सन्तोषं प्रकटितवती।

राजा मन्त्री च ततः निर्गतवन्तौ। मार्गे राजा मन्त्रिणम् उक्तवान्— ''सज्जनः कथं भवति इति अहम् अद्य दृष्टवान्। कृषिकः वचने व्यवहारे च सज्जनः एव'' इति।

''भवदुक्तं सत्यम् एव। प्रशंसार्हः सः कृषिकः। किन्तु एतौ आस्थानवैद्यः आस्थानकविः च आवां यथा चिन्तितवन्तौ तथा न स्तः किल?'' इति उक्तवान् मन्त्री।

''तयोः वैयक्तिकव्यवहारः सर्वथा निन्दायोग्यः। अतः एव अहं कवेः शिष्यं, वैद्यस्य पुत्रं च आस्थाने नियोजयितुम् इच्छामि। तौ तु कृषिकः इव गुणवन्तौ, प्रतिभाशालिनौ देशभक्तौ च। एषः कृषिकः च योग्येन पुरस्कारदानेन आस्थाने सम्माननीयः'' इति उक्तवान् राजा।

अनन्तरम् एकसप्ताहाभ्यन्तरे राजा कवेः शिष्यम् आस्थानकविस्थाने, वैद्यस्य पुत्रं च आस्थानवैद्यस्थाने नियोजितवान्। सोमनाथम् आस्थानं प्रति आहूय पूर्णायां सभायां सत्कृत्य विशालस्य ग्रामस्य आयग्रहणाधिकारं तस्मै दत्तवान्।





# धर्मसङ्कटम्

इन्द्रपादग्रामं पूर्वं कदाचित् विश्वम्भरः नाम पण्डितः आगतवान्। सः धर्मशास्त्रविषये विशेषपाण्डित्यं प्राप्तवान् आसीत्। अतः एव ग्रामीणाः तं गौरवादरेण दृष्टवन्तः। उक्तवन्तः च यत् भवता शास्त्रेषु स्थिताः मुख्याः विषयाः वक्तव्याः इति। विश्वम्भरः एतत् अङ्गीकृतवान्। तस्य उपन्यासार्थं शिवालयस्य प्राङ्गणे व्यवस्था उपकल्पिता।

एतत्कार्यक्रमार्थं बहवः जनाः सम्मिलिताः। प्रथमदिने विश्वम्भरः धर्मविषये विवरणं कुर्वन्– "न केवलं मद्यपानं महापापाय, ये मद्यपानिनां सम्पर्के भवन्ति, ये च तेषां साहाय्यम् आचरन्ति, प्रोत्साहयन्ति वा, ते अपि पापभागिनः भवन्ति" इति उक्त्वा धर्मशास्त्रस्य बहूनि उदाहरणानि प्रदर्शितवान्।

अनन्तरदिने तस्यां सभायां सत्यविषये उपन्यासं कुर्वन् 'यस्यां कस्यां परिस्थितौ अपि असत्यं न वक्तव्यम्' इति उक्त्वा हरिश्चन्द्रस्य उदाहरणेन विषयं सविस्तरं प्रतिपादितवान्। सर्वे अश्रूणि स्रावयन्तः उपन्यासं श्रुतवन्तः।

एवं धर्मबोधनं समाप्य विश्वम्भरः ग्रामज्येष्ठस्य गौरवेशस्य गृहं प्रति प्रस्थितः, यतः तत्रैव तस्य वसतिः उपकल्पिता आसीत् ग्रामीणैः। मार्गे अनन्तनामकः कश्चित् आगत्य विश्वम्भरं नमस्कृत्य– "श्रीमन्! भवान् बहून् धर्मसूक्ष्मान् सर्वे यथा सम्यक् अवगच्छेयुः तथा उक्तवान्। एतदनुगुणं मम व्यवहारे अपि परिवर्तनम् आनेतुं प्रयत्नं करिष्यामि" इति उक्त्वा ततः गतवान्।

तस्य वचनानि श्रुत्वा सन्तुष्टः विश्वम्भरः आत्मना सह आगच्छन्तं गौरवेशम् उक्तवान्– "पश्यतु भोः, वचसि अन्यत्, व्यवहारः अन्यः इति हि

"अनामिका"

लोकस्थितिः। एवं स्थिते एतस्य अनन्तस्य चित्तशुद्धिः प्रशंसार्हा एव। मम उपन्यासश्रमः सार्थकः सञ्जातः'' इति।

तदा गौरवेशः मन्दहासपूर्वकम् उक्तवान्– ''भोः, एतम् अनन्तम् अहं बाल्यतः जानामि किल? महोद्धतः सः। एतादृशस्य अनन्तस्य अन्तरङ्गे परिवर्तनं जातम् इति अहं तु न विश्वसिमि। अहं चिन्तयामि – सः भवन्तं तोषयितुम् इच्छति इति।'' इति।

विश्वम्भरः क्षणकालानन्तरम् उक्तवान्– ''सामान्यतः सर्वेऽपि पुरतः स्थितस्य प्रामाणिकताम् अल्पाम् एव भावयन्ति। एषा हि लोकस्थितिः। मम तु भाति – अनन्तः मम बोधनम् अवगतवान् इति। अतः तस्य व्यवहारे कृतकतां न पश्यामि अहम्'' इति।

अनन्तरदिने विश्वम्भरः गौरवेशस्य गृहे उपविश्य कैश्चित् सह सम्भाषमाणः आसीत्। तदा अनन्तः तत्र आगत्य– ''श्रीमन्! अद्य प्रातःकाले एव अहं धर्मसङ्कटे पतितः। एतस्य परिहारमार्गः भवता एव वक्तव्यः'' इति।

''किं तत् धर्मसङ्कटम्?'' इति पृष्टवान् विश्वम्भरः।

''अद्य प्रातःकाले अहं कृषिक्षेत्रतः आगच्छन् आसम्। तदा द्वौ पानशीलौ मां दृष्टवन्तौ। 'मदिरापणं गन्तुं कः मार्गः?' इति तौ साग्रहं मां पृष्टवन्तौ। 'ये पानशीलानां



साहाय्यम् आचरन्ति ते अपि पापभागिनः भवन्ति' इति भवतः वचनं स्मरन् अहं 'मार्गं न जानामि भोः' इति उक्त्वा आगतवान्। वस्तुतः तु मदिरापणं प्रति मार्गम् अहं जानामि। अनन्तरकाले 'अहम् असत्यम् उक्तवान्' इति भावना उत्पन्ना मम मनसि। अहं पापम् आचरितवान् खलु?'' इति उक्तवान् अनन्तः।

विश्वम्भरः मृदु हसन्– ''अत्र धर्मसङ्कटं किम्? भवतः कोऽपि पापलेपः नास्ति। दुष्टकार्ये निरतानां निवारणे यः कोऽपि प्रयत्नः आचरितः चेदपि सः धर्मबद्धः एव'' इति उक्तवान्।

तदा अनन्तः विनयेन एव उच्चैः पृष्टवान्– ''भवान् कीदृशः पण्डितः भोः?

मदिरापणं प्रति मार्गः सूचितः चेत् पानशीलौ प्रोत्साहितौ भवतः। मार्गं जानता अपि न उक्तं चेत् सः असत्यवादी भवति। एतादृशपरिस्थितौ किं करणीयम् इति शास्त्रग्रन्थेषु न लिखितं वा? अथवा भवान् एव न पठितवान् स्यात् वा?'' इति।

गृहस्य अन्तः स्थितः गौरवेशः अपि एतत् श्रुतवान्। 'यथा मया चिन्तितं तथैव प्रवर्तते। विश्वम्भरम् अपमानयितुम् एव आगतवान् अस्ति अनन्तः' इति चिन्तयन् गौरवेशः गृहात् बहिः आगतवान्। मार्गे गच्छन्तः केचन जनाः अपि तत्र सम्मिलिताः।

गौरवेशं दृष्ट्वा अनन्तः उक्तवान्– 'पश्यत भोः, सामान्यधर्मसङ्कटपरिस्थितौ अपि परिहारं वक्तुं न शक्नोति एषः पण्डितः। एतादृशेन उक्तं सर्वं मेषेण इव विना विरोधम् अङ्गीकरणीम् इति वदन्ति किल भवन्तः?'' इति।

तदा गौरवेशः शान्तस्वरेण– ''एतद्विषये नं पण्डितं किमर्थं निन्दति भवान्? भवदुक्तधर्मसङ्कटात् बहिः आगन्तुं मार्गः भवदधीनः एव अस्ति'' इति उक्तवान्।

''तत् कथम्? कः सः मार्गः?'' इति आश्चर्येण पृष्टवान् अनन्तः।

''भवान् एतत्क्षणे एव गत्वा मार्गे अटन्तौ तौ पानशीलौ अन्विष्य– 'ग्रामे मदिरापणः कुत्र अस्ति इति अहं वस्तुतः जानामि। तदर्थं गन्तुं मार्गं तु अहं जानन् अपि वक्तुं न शक्नोमि। क्षम्यताम्' इति उक्त्वा गृहं गच्छतु। तदा भवतः धर्मसङ्कटं परिहृतं भविष्यति'' इति उक्तवान् गौरवेशः।

तत्र सम्मिलिताः जनाः हसितवन्तः करताडनं कृतवन्तः च। अनन्तः अपमानेन शिरः अवनमय्य ततः निर्गतवान्।

अनन्तस्य गमनानन्तरं विश्वम्भरः गौरवेशम् उक्तवान्– ''एतादृशानां धर्मसङ्कटस्य परिहारं वक्तुं शास्त्राणां ज्ञानं न, लोकज्ञानम् आवश्यकं'' इति।

''मम सुदीर्घलोकज्ञानेन अहं निश्चितवान् यत् कुतर्किणः वितण्डवादिनः च कदापि समाधातुं न शक्यन्ते इति'' इति हसन् उक्तवान् गौरवेशः।






## ११

(द्रोही नागवर्मा सैन्येन सह दुर्गसमीपम् आगच्छन् अस्ति इति ज्ञातवान् चित्रसेनः। कूटयुद्धार्थम् उपायं चिन्तयित्वा सः "तत्र तत्रैव निलीनाः भवन्तु" इति सेवकान् आज्ञापितवान्। नागवर्मणा सह आगतः व्याघ्रचर्मधारिणां नायकः ज्वालाद्वीपवासी करवीरः नागवर्माणम् उक्तवान् यत् वयं प्रथमं भटान् अन्तः प्रवेशयाम। प्रतिक्रियां परिशील्य आवयोः प्रवेशविषये चिन्तयेम इति। तदनन्तरम्.....)

करवीरस्य सूचना युक्ता एव अस्ति इति चिन्तितवान् नागवर्मा। यतः अविचार्य साक्षात् दुर्गप्रवेशः अपायकारी स्यात् इति सन्देहः तस्य मनसि अपि आसीत् एव। किन्तु आत्मगौरवकारणतः सः स्वकीयम् आतङ्कं बहिः प्रकाशयितुं न इष्टवान्, तावदेव।

करवीरः स्वभावेन न पराक्रमी। विपत्तिं सम्मुखीकर्तुम् अपेक्षितं धैर्यं साहसः व न आसीत् तस्य। अतः एव तादृशम् उपायं सूचितवान् सः।

नागवर्मा भयेन सन्देहेन आतङ्केन च पतितं दुर्गद्वारप्रदेशं पुनः पुनः परीक्षमाणः करवीरम् उक्तवान्– "करवीर! भवतः सूचना युक्ता अस्ति। विषपरीक्षार्थं स्वयं प्रवृत्तिः अनुचिता एव। सैनिकान् अग्रे प्रेषयेम। आपत् आगता चेत् दशद्वादश सैनिकाः मृताः भवेयुः। तथापि आवयोः काऽपि हानिः नास्ति। आवां मरणं प्राप्तवन्तौ चेत् एतेषां सैनिकानां का गतिः भवेत्?" इति।




अनन्तरं स्वकीयम् अश्वं पृष्ठतः परिवर्त्य सैनिकान् पश्यन् अधिकारवाण्या दर्पेण उक्तवान्– "भवन्तः इदानीं निर्भयं दुर्गं प्रवेष्टुम् अर्हन्ति। अस्माकम् एषः सदवकाशः। शत्रुवशं दुर्गं युद्धं बिना एव अस्मद्वशे आगच्छति। न्यायः धर्मः च अस्मत्पक्षे अस्तीति कारणतः एव देवः एतादृशं सदवकाशं कल्पितवान्। भवन्तः उत्साहेन अग्रे सरन्तु" इति।

नागवर्मणः आदेशानुसारं ते सैनिकाः समूहरूपेण अन्तः प्रवेष्टुम् उद्युक्ताः। अश्वारूढः नागवर्मा खड्गं चालयन्– "भोः, शीघ्रं शीघ्रं गच्छन्तु। पतिता दुर्गभित्तिः, सुरक्षामण्डपाः च त्वरया समीकरणीयाः। तारकेश्वरस्य आगमनतः पूर्वं एतत् दुर्गं सुरक्षिततरूपं प्राप्नुयात्। अनन्तरं तु शत्रूणाम् आक्रमणस्य सम्मुखीकरणं न क्लेशाय" इति वदन् तेषाम् उत्साहं वर्धयति स्म। करवीरः अपि मध्ये मध्ये उत्साहवर्धकानि घोषणावाक्यानि वदति स्म।

'दुर्गस्य अन्तः कोऽपि विरोधः उत्पद्येत वा, युद्धं किमपि प्रचलेत् वा?' इति जागरूकतया परिशीलितवन्तौ नागवर्मा करवीरः च। किन्तु तादृशलक्षणं किमपि तत्र न दृष्टम्। तदा तयोः धैर्यम् आगतम्। परस्परं मुखं पश्यन्तौ तौ सन्तोषं प्रकटितवन्तौ।

नागवर्मा करवीरं पश्यन् मन्दहासपूर्वकम् उक्तवान्– "वयं वृथा भीताः। दुर्गस्य अन्तः शत्रुपक्षीयः कोऽपि नास्ति। इतःपरम् दुर्गसमीकरणविषये प्रथमं लक्ष्यं दातव्यं किल?" इति।

करवीरः एतत् अङ्गीकुर्वन् शिरः चालितवान्। अनन्तरं तौ उभौ अपि अश्वम् अग्रे प्रेरितवन्तौ। तयोः सर्वाणि इन्द्रियाणि जागरूकानि आसन् एव।

यावत् तौ द्वारम् अतिक्रम्य द्वित्राणि पदानि अग्रे स्थापितवन्तौ तावता सैनिकानाम् आर्तनादः श्रुतः– "हा हन्त! वयं मृताः! राक्षसाः! महाराक्षसाः!" इति। सैनिकानाम् आर्तनादेन स च प्रदेशः व्याप्तः। भीताः सैनिकाः आत्मरक्षणार्थं पलायनं कुर्वन्तः पतन्तः उत्तिष्ठन्तः च इतस्ततः

धावितवन्तः।

"वञ्चना, महती वञ्चना महाराज! राक्षसान् एतान् सम्मखीकर्तुं वयं न शक्नुमः। यदि जीवेम तर्हि तन्त्रान्तरेण एतान् जेतुं प्रयत्नं कर्तुं शक्नुमः। इदानीम् इतः निर्गमनम् एव वरम्" इति वदन् करवीरः स्वकीयम् अश्वं पृष्ठतः परिवर्त्य चोदितवान्।

"द्रोहिणः! रणभीरवः, पातकिनः!" इति वदन् नागवर्मा अपि स्वकीयम् अश्वं दुर्गद्वारात् बहिः स्थितं प्राङ्गणं प्रति चोदितवान्।

'तत्र पश्यन्तु! नागवर्मा पलायनरतः अस्ति। वनप्रवेशतः पूर्वम् एव सः ग्रहणीयः। धावन्तु। मा त्यजन्तु तम्" इति चित्रसेनः उच्चैः उक्तवान्। एतत् वचनं नागवर्मा अपि श्रुतवान् आसीत्। गतप्राणः इव सः भीत्या करवीरं दृष्टवान्।

अत्रान्तरे राक्षसाः अट्टहासं कुर्वन्तः शिलामय्यः गदाः तौ उद्दिश्य क्षिप्तवन्तः। काश्चन गदाः तयोः समीपे एव आगत्य पतिताः।

"अहो! महती विपत्तिः। आवां सजीवं ग्रहीतुं न शक्यते इति चिन्तयित्वा ते राक्षसाः अस्मान् मारयितुम् एव उद्युक्ताः सन्ति। महाराज! अश्वं वेगेन प्रेरयतु। कथञ्चित् प्राणाः रक्षणीयाः किल?" इति करवीरः भयेन कम्पमानः उक्तवान्।

"कीदृशी वञ्चना तेषाम्। युद्धलक्षणम्



अजानन्तः अटविकाः इव व्यवहृतवन्तः सन्ति खलु! नीचाः! वराकाः!" इति स्वेच्छया वदन् नागवर्मा अश्वं तीव्रं चोदितवान्।

अत्रान्तरे उग्राक्षेण बलात् क्षिप्ता काचित् गदा करवीरस्य अश्वस्य पादेन घट्टिता अभवत्। अश्वः विकाररूपेण हेषारवं कुर्वन् अधः अपतत्।

तदा वेगगमनकारणतः समतोलनम् अप्राप्य करवीरः अपि भूमौ पतितः अभवत्। "महाराज! मृतः अहम्!" इति आक्रन्दनध्वनिः तस्य मुखात् निर्गतः।

करवीरस्य आक्रन्दनं श्रुत्वा नागवर्मा अश्वं स्थगयित्वा पृष्ठतः परिवृत्य दृष्टवान्। उग्राक्षेण क्षिप्तायाः गदायाः



प्रहारेण अश्वस्य पादः भग्नः आसीत्। सः वेदनया भूमौ लुठति स्म। ततः अनतिदूरे एव गुल्मप्रदेशे पतितः करवीरः वस्त्रेषु लग्नां धूलिं निष्कासयन् नागवर्मसमीपम् आगतवान्। पतनकारणतः सः वेगेन धावितुं न शक्नोति।

''करवीर! पुण्यकालः एषः। गुल्मानां मध्ये पतितः इत्यतः भवान् विशेषतः न व्रणितः। यदि शिलानाम् उपरि पतितः भवेत् तर्हि भवतः अस्थिभङ्गः अभविष्यत्। अस्तु, धावन् आगच्छतु। क्षणमात्रम् अपि विलम्ब न करणीयः। प्रायः अस्मदीयाः सर्वे सैनिकाः दुर्गे बद्धाः इति भाति। केचन एव कथञ्चित् आत्मानं रक्षन्तः इतः आगच्छन्तः सन्ति'' इति उक्तवान् नागवर्मा।

करवीरः अपि पृष्ठतः दृष्टिं प्रसारितवान्। केचन सैनिकाः चीत्कारं कुर्वन्तः अरण्यम् उद्दिश्य आगच्छन्तः आसन्। तान् अनुसृत्य जयकारं कुर्वन्तः चित्रसेनस्य सैनिकाः अपि आगच्छन्तः आसन्।

''करवीर! इदानीं वयं शत्रुभ्यः आत्मानं रक्षितुं शक्नुमः वा? भवतः अश्वः निरुपयोगी सञ्जातः। मम अश्वः अपि श्रान्तः। इदानीं किं करवाम?'' इति पृष्टवान् नागवर्मा।

''इदानीं वयम् अश्वम् आरुह्य पलायनं कर्तुं न शक्नुमः एव। शत्रूणां विशेषदृष्टिः आवयोः उपरि एव अस्ति। अतः एव तेषाम् एतादृशः प्रयत्नः। अतः तेषां दृष्टिपथात् आत्मा रक्षणीयः आवाभ्याम्। तत्र पश्यतु। उभौ अस्मत्सैनिकौ आगच्छतः। तौ एतस्य अश्वस्य उपरि आरोप्य अन्येन मार्गेण अरण्यं प्रवेष्टुं सूचयाव। शत्रुसैनिकाः तौ दृष्ट्वा भ्रान्त्या तौ एव अनुसरन्ति। तदा आवाम् उपायेन अन्यां दिशम् अनुसर्तुं शक्नुवः। तौ सैनिकौ आहूवयतु भवान्'' इति सूचितवान् करवीरः।

'एषः उचितः उपायः' इति ससन्तोषं स्वाभिप्रायं प्रकटितवान् नागवर्मा। अनन्तरम् अश्वतः अवतीर्य समीपम् आगतौ उभौ सेवकौ अश्वम् आरोढुम् आदिष्टवान्। स्वशिरसि करवीरस्य च शिरसि स्थितं मुकुटं तयोः भटयोः शिरसि स्थापितवान्। ''भवन्तौ पृष्ठतः अपश्यन्तौ धावताम्। हुँ, चित्रसेनपक्षीयाः सैनिकाः आगताः एव'' इति



वदन् तयोः कृते किमपि प्रष्टुम् अपि अवकाशम् अयच्छन् खड्गस्य अग्रभागेन अश्वं ताडितवान्।

असह्यवेदनया उच्चैः हेषारवं कुर्वन् अश्वः वृक्षाणां मध्ये वेगेन अग्रे अधावत्।

"हन्त! वयं जीविताः! करवीर! इतःपरं का वा दिक् अनुसरणीया?" इति पृष्टवान् नागवर्मा।

समूहरूपेण अस्यां दिशि एव आगच्छतः चित्रसेनसैनिकान् पश्यन् आसीत् करवीरः। तेषु सैनिकेषु केचन भटाभ्याम् अधिरूढम् नागवर्मणः अश्वम् अनुसृत्य धावन्तः आसन्। "भो भोः, तत्र पश्यन्तु। नागवर्मा करवीरः च एकस्मिन् एव अश्वे उपविश्य पलायनरतौ स्तः। गृह्णन्तु" इति उच्चैः वदन्ति स्म ते।

एतत् वचनं श्रुत्वा करवीरः मन्दहासपूर्वकम् उत्साहेन उक्तवान्— "अस्माकम् उपायः फलितः महाराज! आवां पश्चिमदिशम् अनुसराव। आगच्छत्" इति।

अनन्तरं तौ गुल्मानां मध्यतः, शरीरम् अर्धम् अवनमय्य कूर्दन्तौ उत्प्लवमानौ धावन्तौ च चित्रसेनसैनिकाः यथा न पश्येयुः तथा घनारण्यं प्रविष्टवन्तौ।

चित्रसेनः उग्राक्षः च दुर्गद्वारसमीपे स्थित्वा सैनिकैः बन्धनपूर्वकम् आनीतान् शत्रुसैनिकान् पृच्छन्तः आसन्— "भवतां नायकः नागवर्मा कुत्र?" इति।

तेषु शत्रुभटेषु कोऽपि नागवर्मकरवीरयोः उपायं न जानाति। तौ सुरक्षितं घनारण्यं प्रविष्टवन्तौ इत्यपि केनापि न ज्ञायते स्म। भ्रान्त्या अश्वम् अनुसृत्य धाविताः सैनिकाः अनतिकाले एव प्रत्यागतवन्तः। 'केन उपायेन नागवर्मा करवीरः च वञ्चितवन्तौ' इति निवेदितवन्तः च।

"हा हन्त! एतावति प्रयत्ने कृते अपि तौ पलायितवन्तौ किल!" इति सखेदम् उद्गारं प्रकटितवान् चित्रसेनः।

"महाराज! नागवर्मणः, तत्सहचारिणः व्याघ्रचर्मधारिणः करवीरस्य च ग्रहणं मम दायित्वम्। इदानीम् एव मम भटान् अरण्ये सर्वत्र प्रेषयिष्यामि" इति उक्तवान् उग्राक्षः।

उग्राक्षस्य सूचनानुसारं राक्षसाः यत् लब्धं

तत् आयुधं स्वीकृत्य अरण्यस्य चतसृषु दिक्षु अपि प्रसृताः अभवन्।

अनन्तरम् अल्पे एव काले चित्रसेनेन प्रेषितः सेनानायकः तारकेश्वरमहाराजः च ससैन्यं प्रत्यागतवन्तौ।

कपिलपुरवशीकरणस्य विवरणं श्रुत्वा तारकेश्वरः अतीव सन्तुष्टः। किन्तु नागवर्मा सजीवं पलायनं कृतवान् इति वार्तां श्रुत्वा सः खेदं कोपं च अनुभूतवान्।

"महाघातुकस्य तस्य उपस्थित्या अपायस्य भीतिः सर्वदा तिष्ठति एव। दुष्टस्य तस्य ज्वालाद्वीपवासिनां साहाय्यम् अपि; तेषां राक्षसपक्षिणः कदा आक्रमणं कुर्युः इति ज्ञातुम् एव न शक्नुमः वयम्" इति उक्तवान् तारकेश्वरः।

तारकेश्वरेण प्रकटिता एव भावना तत्रस्थानां सर्वेषाम् अपि मनसि आसीत्। उग्राक्षस्य अनुचराः राक्षसवीराः कदा तौ बद्ध्वा आनयेयुः इति ते प्रतीक्षमाणाः सन्ति।

चित्रसेनः कपिलपुराधीशाय वीरसिंहाय स्वपितुः परिचयं कारितवान्। वीरसिंहः चित्रसेनेन कृतं साहाय्यं तारकेश्वराय निवेदयन्– "इतःपरम् अधिककालम् अहं राज्यभारं निर्वोढुं न शक्नोमि। मम पुत्रः नास्ति। एषा मम अद्वितीया पुत्री। एतया आवयोः सम्बन्धं वर्धयितुम् इच्छामि" इति उक्तवान्।

तारकेश्वरः कान्तिमतीं इतःपूर्वम् एव दृष्टवान् आसीत्। सा चित्रसेने आसक्ता इति



वार्ता अपि सैनिकानां सम्भाषणद्वारा ज्ञाता आसीत्। कान्तिमतीं स्नुषात्वेन स्वीकर्तुं तारकेश्वरः अपि सन्तोषेण अङ्गीकरोति। वस्तुतः एतेन तस्य एव लाभः। तदीयं राज्यं विना श्रमं द्विगुणितं विस्तारं प्राप्स्यति।

तारकेश्वरस्य अनुमतेः प्राप्तेः अनन्तरं केषुचित् एव दिनेषु चित्रसेन-कान्तिमत्योः विवाहमुहूर्तः निश्चितः। विवाहः अपि सवैभवं सम्पन्नः। विवाहमङ्गलसन्दर्भे सर्वेभ्यः सैनिकेभ्यः सेनानायकेभ्यः च पारितोषिकाणि दत्तवान् चित्रसेनः।

'बहुविधसाहाय्यं कृतवते उग्राक्षाय अमूल्यं पारितोषिकं किमपि दातव्यम्' इति चित्रसेनस्य विचारः।

"उग्राक्ष! भवान् यत् साहाय्यं कृतवान्

तत् अमूल्यम्। वयं सर्वे भवतः विषये कृतज्ञाः स्मः च। अस्मिन् सन्दर्भे भवान् कीदृशं पारितोषिकम् इच्छति? वदतु" इति उक्तवान् चित्रसेनः।

"महाराज! मम अपेक्षा महती एव भवेत्। ददामि इति उक्त्वा दातुं न शक्नोति चेत् भवतः एव कष्टं किल? अतः विचिन्त्य अङ्गीकरोतु" इति उक्तवान् उग्राक्षः विनयेन।

"तथा किमपि न भवति। अपेक्षां प्रकटयतु भवान्" इति साग्रहम् उक्तवान् चित्रसेनः।

"महाराज! इतःपूर्वम् प्रथमपरिचये एव मया मम अपेक्षा भवतः पुरतः प्रकटीकृता। भवान् अङ्गीकृतवान् आसीत्। तदनुगुणं जनिष्यमाणः पुत्रः यदा अष्टादशवर्षीयः भविष्यति तदा सः मह्यम् अर्पणीयः भवता। इदानीं तदेव किञ्चित् अन्यथा पृच्छामि। भवतः प्रथमम् अपत्यं, पुमान् वा भवतु स्त्री वा भवतु, यदा पञ्चवर्षीयं भवति तदा मह्यम अर्पणीयम्" इति उक्तवान् उग्राक्षः।

चित्रसेनः क्षणकालं विचारमग्नः आसीत्। साधकबाधकं पुनः अपि आलोचितवान् सः।

'प्रथमम् अपत्यं उग्राक्षाय अर्पणीयम् एव। एतत् तु पूर्वम् एव अङ्गीकृतम्। अर्पणीयम् एव चेत् अष्टादशे किं, पञ्चमे किम्? उभयम् अपि समानम् एव।'

एवं मनसि भावं दृढीकृत्य गम्भीरस्वरेण उग्राक्षम् उक्तवान् चित्रसेनः– "भोः, भवान् यथा पृष्टवान् तथैव भविष्यति। तत्र सन्देहः मास्तु" इति।

चित्रसेनस्य वचनं श्रुतवतः उग्राक्षस्य सन्तोषस्य सीमा एव नास्ति। सः सन्तोषातिरेकेण– "महाराज! अहम् आजीवनं भवतः दासानुदासः" इति वदन् नमस्कृतवान्।

अनन्तरं स्वकीयान् अनुचरान् पश्यन्– "भोः राक्षसवीराः! भवन्तः सन्ति खलु अत्र?" इति उच्चैः पृष्टवान् सः।

(अनुवर्तते)






# श्रेष्ठ देवता

**शा**पवचनेन सदा भापयन्तं वेतालं ग्रहीतुं त्रिविक्रमः पुनः अपि वृक्षस्य समीपं गतवान्। शाखायां लम्बमानं शवं वृक्षतः अवतार्य स्कन्धे आरोप्य मौनं श्मशानाभिमुखं प्रस्थितवान्। त्रिविक्रमस्य मौनं भञ्जयितुम् इच्छन् वेतालः अवदत्– "अये राजन्! अस्मिन् अर्धरात्रे मा नेतुं यः भवन्तं प्रेरितवान् सः कीदृशः स्यात्? सः अल्पः मन्दमतिः च स्यात् चेदपि कथञ्चित् अधिकारस्थानं प्राप्तवान् स्यात्। दैवानुग्रहेण बहवः कदाचित् विशिष्टां शक्तिं प्राप्नुवन्ति। अत्र उदाहरणरूपेण अहं देवताद्वयस्य कथां श्रावयामि। श्रद्धया शृण्वन् भवान् कथायाः युक्तायुक्ततां परिशीलयतु। एतेन भवतः मार्गायासः तु परिहृतः भविष्यति एव" इति।

अनन्तरं वेतालेन कथा आरब्धा–

"शिलापुरराज्यस्य सीमाप्रान्ते अरण्यसमीपे देवालयद्वयम् आसीत्। तत्र

## वेतालकथा



एकः देवालयः जगदम्बायाः। अपरश्च देवालयः शिवाम्बायाः।

तयोः देवतयोः सामर्थ्ये भेदः आसीत्। शिवाम्बासन्निधिं ये आगच्छन्ति तेषां सर्वेषाम् इष्टार्थाः सिध्यन्ति स्म। किन्तु जगदम्बा दिने एकस्य एव इष्टार्थं पूरयितुं समर्था आसीत्।

एतत्कारणतः शिवाम्बायाः देवालये सदा भक्तानां सम्मर्दः। जगदम्बामन्दिरं प्रति गन्तारः तु विरलाः। अतः शिवाम्बा भावयति स्म यत् अहम् एव श्रेष्ठा इति। अतः सा सदा गर्वेण एव व्यवहरति।

शिवाम्बा यदा कदापि रात्रिसमये जगदम्बां द्रष्टुं गच्छति। तत्सन्दर्भे सा गर्वेण वदति– "किं भोः जगदम्ब! भवत्याः परिस्थितिं दृष्ट्वा अहं खिन्ना भवामि। मम देवालयं तु असङ्ख्याः भक्ताः आगच्छन्ति। भवत्याः समीपं तु द्वित्राः अपि आगच्छन्ति वा न वा! मम एव एतावान् खेदः। भवत्याः परिस्थितिः कथं वा भवेत्?" इति।

तत् श्रुत्वा जगदम्बा शान्तस्वरेण एव उक्तवती– "एतद्विषये भवत्याः किमर्थं खेदः? खेदस्य कारणं किमपि नास्ति अत्र। अहं तु भक्तानां हितम् इच्छामि। तत् मद्द्वारा वा भवतु भवद्द्वारा वा भवतु, किं तेन?" इति।

जगदम्बायाः वचनैः शिवाम्बायाः निरुत्साहः भवति। 'जगदम्बा अपि मम माहात्म्यं जानातु, तत् वर्णयतु, स्तुतिं च करोतु' इति शिवाम्बायाः निरीक्षा। तादृशी निरीक्षा पूरिता न भवति इति सा बहुधा खिद्यति।

एकदा शिलापुरराज्यस्य शासकः हरिश्चन्द्रः एकाकी एव अश्वम् आरुह्य शिवाम्बामन्दिरम् आगतवान्। अश्वात् अवतीर्य मन्दिरं प्रविष्टवान्। प्रदक्षिणपूर्वकं देवीं नमस्कृत्य– "मातः! भवत्याः महिमविषये अहं बहुधा श्रुतवान्। अत एव इदानीम् अत्र आगतवान्। इदानीं मम एका प्रार्थना अस्ति। अहं पार्श्वस्थं सत्यपालराज्यं वशीकर्तुम् इच्छन् आक्रमणं करोमि। युद्धे प्राणहानिः यावती वा भवतु, विजयः मम एव भवेत्। एतत् यथा सिध्येत्

तादृशवरेण माम् अनुगृह्णातु'' इति प्रार्थितवान्। अनन्तरम् अश्वम् आरुह्य ततः निर्गतवान् च।

किञ्चित्कालानन्तरं ब्रह्मरुद्रः नाम महाचोरः शिवाम्बामन्दिरम् आगत्य देवीं नमस्कृत्य– ''महिमान्विते! महामातः! अहम् अद्य शिलापुरनगरे प्रचलिष्यमाणे धनिकगृहस्य विवाहोत्सवे मम अनुचरैः सह गत्वा तत्रत्यम् ऐश्वर्यं लुण्ठयितुम् इच्छामि। मम प्रयत्नः निरातङ्कं यथा प्रचलेत्, अभिकलाभः च यथा स्यात् तथा वरेण अनुगृह्णातु'' इति भक्त्या प्रार्थितवान्। ततः निर्गतवान् च।

पुनः किञ्चित्कालानन्तरं तस्मिन् एव अरण्ये निवसन् रक्तभैरवः नाम राक्षसः मानवरूपेण शिवाम्बासमीपम् आगत्य– ''देवि! नरमांसं न लब्धम् इति कारणतः चतुर्भ्यः दिनेभ्यः उपवासम् आचरितवान् अहम्। इदानीम् एव चत्वारः मानवाः मम आहारार्थं यथा लभ्येरन्, प्रतिदिनं नरमांसरूपः आहारः दुर्लभः यथा न स्यात् तथा वरेण माम् अनुगृह्णातु कृपया'' इति प्रार्थितवान्, अरण्यम् उद्दिश्य ततः गतवान् च।

महाराजेन, महाचोरेण, ब्रह्मराक्षसेन च याः अपेक्षाः प्रकटिताः तासु अधर्म-क्रूरत्वादयः सन्ति इति सा ज्ञातवती। शिवाम्बा सत्त्वगुणस्वरूपिणी। अतः 'एतेषां त्रयाणाम् अपि अपेक्षाः न पूरणीयाः' इति सा निश्चितवती। अन्यः कोऽपि समीचीनः भक्तः आगच्छेत् इति सा सायङ्कालपर्यन्तं प्रतीक्षां कृतवती। किन्तु





तद्दिने कोऽपि समीचीनः भक्तः तस्याः समीपं न आगतवान् एव।

इदानीं तस्याः उभयसङ्कटम्। यतः यदि सा द्वयोः वा इष्टार्थं न पूरयति तर्हि तस्याः देवत्वम् अपगच्छति। देवत्वं नष्टं चेत् महिमा अपि नश्यति। देवत्वरक्षणार्थम् अद्य आगतेषु ययोः कयोश्चित् इष्टार्थं यदि सा पूरयेत् तर्हि लोकस्य अपकारः एव सिध्येत्। तत् अपि तस्याः इष्टकरं न। का वा सात्त्विकी देवता तामसीम् इच्छां पूरयेत्? एतादृश–परिस्थितौ कः मार्गः अनुसरणीयः इति सा बहुधा चिन्तनं कृतवती।

एवं चिन्तनसमये सा जगदम्बां स्मृतवती। 'जगदम्बां पृच्छामि चेत् समस्यायाः परिहारः भवेत्' इति भावना आगता तस्याः मनसि।

तस्यां रात्रौ सा जगदम्बायाः आलयं गत्वा उक्तवती– "भगिनि! अहम् इदानीं मङ्कटपरिस्थितौ पतिता अस्मि। किं करणीयम् इति न जानामि। भवती कमपि परिहारोपायं सूचयेत् इति विचिन्त्य भवत्याः समीपम् आगतवती" इति।

"का सा समस्या?" इति पृष्टवती जगदम्बा। तदा शिवाम्बा स्वसमीपम् आगतानां राज-चोर-राक्षसानां प्रार्थना-रीतिं निवेद्य– "त्रयाणाम् अपि इच्छा लोकापकारिणी एव। अतः तेषाम् इष्टार्थं पूरयितुम् अहं न इच्छामि। 'किन्तु द्वयोः वा इष्टार्थः न पूरितः चेत् मम देवत्वम् अपगच्छति' इति भवती जानाति एव। अद्य मम दौर्भाग्यवशात् कोऽपि सात्त्विकः भक्तः न आगतः एव। एतादृशपरिस्थितौ ममापि द्वन्द्वम्– भक्तयोः इष्टार्थम् पूरयामि, उत मम देवत्वं रक्षयामि इति। इदानीं मया किं करणीयम् इति भवती चिन्तयति?" इति पृष्टवती।

तदा जगदम्बा उक्तवती– "भगिनि, किमर्थं तावती चिन्ता? मया यथा सूच्यते तथा आचरतु। तेन भवत्या कस्यापि दुष्टस्य इष्टार्थः पूरणीयः अपि नास्ति, भवत्याः देवत्वहानिः अपि न भविष्यति" इति।

"तत् कथं भवितुम् अर्हति?" इति आश्चर्येण पृष्टवती शिवाम्बा।

"भवती तेषां दुष्टानाम् इष्टार्थं न पूरयतु एव। तान् विस्मरतु भवती। तदा भवत्याः देवत्वं नश्यति, मन्ये। नष्टस्य देवत्वस्य प्राप्त्यर्थं मां प्रार्थयतु। अहं तु दिने एकस्य इष्टार्थं पूरयितुं समर्था एव। एवं भवती पुनः देवत्वं प्राप्स्यति। समस्या च परिहृता भविष्यति" इति सूचितवती जगदम्बा।

इदानीं शिवाम्बा पुनः आलोचने निमग्ना– 'पूर्वम् अहम् आत्मनः सामर्थ्यम् एव श्रेष्ठं मन्यमाना एतस्याः पुरतः गर्वेण व्यवहृतवती। इदानीं तेषां दुष्टानाम् इष्टार्थम् अपूरयन्ती देवत्वहीना भवामि चेत् एषा जगदम्बा अपि असूयया वरम् अनुगृहीत निराकरोति चेत् मम अधोगतिः एव भवेत् किल? इष्टार्थपूरणे असमर्थायाः मम देवालयं को वा भक्तः आगच्छेत्? तदा जगदम्बा तु यथापूर्वं प्रसिद्धा एव स्थास्यति। अहं केवलं गतवैभवं स्मरन्ती दिनानि यापयिष्यामि" इति।

एवं किञ्चित्कालं द्वन्द्वे पतिता आसीत् सा। अन्ते किमपि दृढं निश्चित्य मनसि एव उक्तवती– "मम गतिः या काऽपि वा भवतु। लोकापकारम् अहं न इच्छामि। अतः अद्य आगतेषु दुष्टेषु कस्यापि इच्छा पूर्णा न भवतु" इति।

अनन्तरक्षणे एव तस्याः मुखकान्तिः म्लाना जाता। पूर्वतनं दिव्यं तेजः नष्टम् एव। सा देवत्वहीना सञ्जाता आसीत्।

आत्मनि जातं परिवर्तनं परिशीलयन्ती शिवाम्बा जगदम्बां प्रार्थितवती– "देवि!



भवतीं प्रार्थयन्ती अस्मि-नष्टां मम शक्तिं पुनः मयि आवाहयत" इति।

"तथास्तु" इति आशीर्वादेन शिवाम्बाम् अनुगृहीतवती जगदम्बा।

तत्क्षणे एव शिवाम्बायाः मुखं पूर्वतनकान्त्या प्रकाशमानं जातम्। सा यथापूर्वं शक्तिमती सञ्जाता।

वेतालः एवं कथां समाप्य त्रिविक्रमम् उक्तवान्– "भोः त्रिविक्रम! शिवाम्बा शक्तिमती स्यात् नाम। जगदम्बायाः पुरतः तया प्रदर्शितेन व्यवहारेण एव ज्ञायते यत् सा गर्वशीला इति। एतादृशीम् अल्पां किमर्थं वरेण अनुगृहीतवती जगदम्बा? जगदम्बायाः विवेचनशक्तिः एव नास्ति इति भावयामः वा? एतस्य सन्देहस्य परिहारं जानन् अपि भवान् यदि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा त्रिविक्रमः एवम् उक्तवान्– "आरम्भे शिवाम्बा गर्वेण व्यवहरन्ती अल्पत्वं प्रदर्शितवती इति तु सत्यम् एव। किन्तु 'दुष्टानाम् इष्टपूरणं जगतः हानिकरम्' इति भावना यदा तस्याम् आगता तदा महत् परिवर्तनम् एव सिद्धम्। आत्मनः देवत्वं नश्यति इति जानती अपि सा तेषाम् इष्टपूरणं निराकृतवती। जगदम्बा देवत्वं पुनः अनुगृह्णीयात् वा न वा इति सन्देहः अपि आसीत् तत्समये। तथापि सा धैर्येण दुष्टानाम् इष्टपूरणं निराकृत्य त्यागबुद्धिं प्रदर्शितवती। अल्पैः एतत् सर्वथा असाध्यम् एव। जगदम्बा तु श्रेष्ठा देवता। शिवाम्बायाः साहाय्यकरणेन तस्याः हानिः कापि नास्ति। स्वभावानुगुणम् उदारतां प्रदर्शितवती सा। शिवाम्बा तु आत्मानं प्रयत्नेन निगृह्य आसाधारणीं त्यागबुद्धिं प्रदर्शितवती। अतः शिवाम्बायाः व्यवहारः एव श्रेष्ठः इति भाति अत्र। सा एव श्रेष्ठा देवता" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।





# मन्त्रिणः युक्तिः

अनेकवर्षेभ्यः पूर्वं मणिपुरस्य राजा स्वपुत्र्याः माणिक्यदेव्याः जन्मदिननिमित्तम् एकं नवरत्नहारं कारितवान्। विशिष्टः एषः हारः कदाचित् रात्रौ चोरितः अभवत्।

अन्तःपुरे बाह्यः चोरः प्रवेष्टुं सर्वथा न शक्नोति। राजभवनस्थेन एव केनचित् एतत् चौर्यं कृतम् आसीत्।

'एतस्य चौर्यस्य अन्वेषणं कथं करणीयम्? एकैकशः सेवकान् आहूय पृष्टं चेत् वस्तुस्थितिः न ज्ञायेत एव। एकैकम् अपि 'भवान् एव चौर्यं कृतवान्' इति वदामः चेत् तत् प्रश्नकर्तुः असामर्थ्यम् एव प्रकटीकरोति। यः चौर्यं करोति सः धृष्टः भवति एव। अतः उत्तरदातुः मुखभाव दृष्ट्वा चोरं ज्ञातुं न शक्नुमः।'

एवं बहुधा चिन्तनानन्तरं मन्त्रिणः मनसि एकः उपायः स्फुरितः। सः मध्याह्नतः पूर्वम् एव विश्वासार्हान् त्रीन् सेवकान् समीपम् आहूय अग्रे किं करणीयम् इति बोधितवान्।

मध्याह्नानन्तरं मन्त्री सर्वान् सेवकान् राजभवनस्य पुरतः प्राङ्गणे समावेशितवान्। "ह्यः रात्रौ अस्मासु एव कश्चित् राजकुमार्याः कण्ठे स्थितं नवरत्नखचितं हारं चोरितवान्। चोरः इदानीं यदि स्वयम् अग्रे आगत्य अपराधम् अङ्गीकरोति तर्हि क्षाम्यामि। अन्यथा सः कठोरं दण्डनं महान्तम् अनुतापं च अनुभविष्यति। हे चोर! अग्रे आगच्छतु। रत्नहारं समर्पयतु" इति उक्तवान् च।

तदा सर्वत्र मौनम्। कोऽपि अग्रे न आगतवान्। अत्रान्तरे पिशाचोच्चाटकः कश्चन मान्त्रिकः राजभवनं प्रविष्टवान्।

तदा मन्त्री– "आगच्छतु महाभाग! इदानीं भवतः मन्त्रदण्डप्रयोगस्य एव आवश्यकता अस्ति" इति वदन् मान्त्रिकं गौरवपूर्वकं स्वागतीकृतवान्।

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

तत्समये वणिग्वेषधारी कश्चित् धावन् आगत्य– "महामन्त्रिन्! रक्षणीयः अहम्। गतरात्रौ चोरः कश्चन मम गृहम् आगत्य दशसहस्रं रूप्यकाणि अपहृत्य गतवान्। कथञ्चित् चोरम् अन्विष्य मदीयं धनं मह्यं दापयतु कृपया" इति मन्त्रिणः पादयोः पतितवान्।

तदा मन्त्री मान्त्रिकं पश्यन्– "श्रीमन्! एतस्य गृहे चौर्यं केन कृतम् इति प्रथमं ज्ञात्वा सूचयतु। अनन्तरम् अत्रत्यचोरस्य विषये चिन्तयिष्यामः" इति उक्तवान्।

"यथाज्ञापयति भवान्" इति वदन् मान्त्रिकः कमण्डलुतः जलं स्वीकृत्य "ह्रां, ह्रीम् ...." इति मन्त्रं पठन् तत्र स्थितानां सर्वेषां सेवकानाम् उपरि प्रोक्षणं कृतवान्।

तदा सेवकेषु कश्चित् उच्चैः आक्रन्दनं कुर्वन् भूमौ इतस्ततः लुठन्– "हन्त! मृतः अहम्। तापः तापः!" इति रोदनं कर्तुम् आरब्धवान्। रोदनं कुर्वन् एव– "मां न मारयतु। अहम् एव वणिग्गृहे चौर्यं कृतवान्। चोरितं धनं प्रत्यर्पयिष्यामि" इति उक्तवान् च।

"अत्रत्यः चोरः एव बहिः गत्वा चौर्यं कृतवान् इति इदानीं ज्ञातम्। एषः एवम् एव किञ्चित्कालं वेदनाम् अनुभवतु। इदानीं रत्नहारं चोरितवतः चोरस्य अन्वेषणं करोतु। कदाचित् एषः एव अत्रापि चौर्यं कृतवान् स्यात् अपि" इति मान्त्रिकम् उक्तवान् मन्त्री।

भूमौ पतितः सः "श्रीमन्! सत्यं वदामि। अत्र चौर्यम् अहं न कृतवान्" इति उक्तवान्।

अत्रान्तरे अन्तःपुरस्य दासी काचित् कम्पमाना आगत्य– "प्रभो! अहं क्षन्तव्या। अविवेकिनी अहम् एव रत्नहारं चोरितवती। मां रक्षतु कृपया" इति वदन्ती रत्नहारं समर्पितवती।

तदा यः भूमौ पतित्वा लुठन् आसीत् सः हसन् उत्थितवान्। मान्त्रिकः वेषं निष्कास्य स्ववेषेण स्थितवान्। एवम् एव वणिक् अपि। वस्तुतः ते त्रयः अपि मन्त्रिणः सेवकाः एव। मन्त्रिणा आयोजितस्य रूपकस्य कारणतः रत्नहारः बिना क्लेशं प्राप्तः।



अस्माकं देशस्य वैशिष्ट्यानि

# रक्तदुर्गम्



अस्माकं राजधान्यां देहल्यां स्थितं रक्तदुर्गं प्रपञ्चे एव सुविख्यातम्। एतत् दुर्गं महतः वैभवस्य, विषादपूर्णघटनानां च साक्षिरूपेण तिष्ठति। सुप्रसिद्धः चरित्रलेखकः फर्गूसन् वदंति यत् एतत् दुर्गं विशिष्टेन इतिहासेन प्रपञ्चे एव अद्वितीयं स्थानम् अर्हति इति।



चक्रवर्ती शाहजहान् एतत् दुर्गं निर्मितवान्, यश्च बहूनाम् अपूर्वाणां स्मारकभवनानां निर्माता अस्ति। सः देहलीनगरं स्वराजधानीं परिकल्प्य १६३८ तमे वत्सरे एतस्य दुर्गस्य निर्माणकार्यम् आरब्धवान्। दशसु वर्षेषु समापितवान् च।

दुराक्रमणकारणात् भूकम्पकारणात् च रक्तदुर्गस्य बहूनि भवनानि नष्टानि। तथापि यानि सन्ति तेषु बहूनि अपूर्वाणि सुरक्षितानि च सन्ति। चान्दनीवृत्तस्य अभिमुखतया स्थितं लाहोर् द्वारं तादृशेषु भवनेषु मुख्यतमम्।





अत्यमूल्यैः वज्रवैडूर्यादिभिः निर्मितं मयूरसिंहासनं यत्र अस्ति, तादृशस्य रक्तदुर्गस्य वैभवम् इदानीं गतेतिहासे लीनम्। यदा शाहजहान् शय्याम् आश्रितवान् तदा तदीयः तृतीयः पुत्रः औरङ्गजेबः दुराशापरः सन् तत्समये सिंहासने उपविष्टं दारानामकं बद्ध्वा राजमार्गे नयन् हतवान्।

औरङ्गजेबः एव मोगलसाम्राज्यस्य पतनम् आरब्धम्। समयं प्रतीक्षमाणः पर्शियाशासकः नादिर् षा १७३९ तमे वत्सरे देहलीनगरस्य उपरि आक्रमणं कृतवान्। स महता गजसैन्येन सह आगत्य रक्तदुर्गम् आक्रान्तवान्। महम्मद् षा भवनं वशीकृतवान् च।





तद्दिने सायङ्काले नादिर् षा सैनिकाः केचन आपणानां लुण्ठने उद्युक्ताः। तदा केचन वणिजः नादिर् षा सैनिकान् मारितवन्तः। एतेन कुपितः नादिर् षा 'नगरस्थान् सर्वान् पौरान् मारयन्तु' इति स्वसैनिकान् आदिष्टवान्। पुरुष-स्त्री-बाल-वृद्धभेदं विना ते क्रूरेण सैनिकाः २० सहस्रं पौरान् निर्दयं मारितवन्तः।

नादिर् षा अपारेण धनराशिना सह स्वदेशं गतवान्। एतदनन्तरम् अपि रक्तदुर्गस्य उपरि बहूनि दुराक्रमणानि प्रवृत्तानि। १७८८ तमे वत्सरे रोहिल्लवंशीयाः दुर्गं वशीकृतवन्तः। यदा यावन्निरीक्षितं तावत् ऐश्वर्यं न लब्धं तदा कुपितः गुलाम् खदीर् षा आलम् चक्रवर्तिनः नेत्रे खड्गेन निष्कासितवान्।





१८५७ तमे वत्सरे आंग्लशासनं विरुध्य सैनिकाः युद्धम् उद्घोषितवन्तः। ते रक्तदुर्गसमीपे सम्मिलिताः सन्तः अन्तिमस्य चक्रवर्तिनः बहादुर् षा जफार् महोदयस्य आशीर्वादं प्रार्थितवन्तः। वृद्धः चक्रवर्ती स्वकीयम् अङ्गीकारं दत्तवान्। किन्तु सैनिकाः कार्ये असफलाः जाताः। एतत्परिणामतः दोषित्वेन निर्दिष्टः षा जाफार् बर्मादेशं नीतः।

१९४५ तमे वत्सरे सुभाषचन्द्रबोस् महोदयेन स्थापितस्य भारत-राष्ट्रिय-सैन्यस्य विषये रक्तदुर्गे विचारणा प्रवृत्ता। अपराधिनां पक्षतया नेहरू, सर्दार् पटेल्, असफ् अली, तेज् बहादुर् सप्रू, बुलाभाय् देसायी, इत्यादयः प्रमुखाः नेतारः तत्र उपस्थिताः। अन्ते 'त्रयः सैन्याधिकारिणः अपराधिनः' इति निर्णयः कृतः। किन्तु ते दण्डिताः न अभवन्।





१९४७ तमे वत्सरे अगस्ट् १५ दिनाङ्के भारतं यदा स्वतन्त्रं जातं तदा जवाहरलाल् नेहरू रक्तदुर्गस्य आवरणे भारतीयं ध्वजम् उड्डायितवान्। स्वातन्त्र्योदयकालेऽपि सम्बद्धम् इत्यतः इतिहासप्रसिद्धस्य रक्तदुर्गस्य महत्त्वम् इतोऽपि प्रवृद्धम्।



# स्वयंकृतापराधः

पञ्चशतवर्षेभ्यः पूर्वं धर्मात्मा इति ख्यातः मात्यास्नामकः महाराजः हङ्गरीदेशं परिपालयति स्म। तस्मिन् काले राजधानीतः अनतिदूरे वर्तमाने एकस्मिन् ग्रामे कश्चित् धनिकः वसति स्म। सः धनिकः महान् धूर्तः, वञ्चकः च आसीत्।

सः किमपि किमपि असत्यं वदति, भ्रामकवचनानि वदति। अन्ये तस्य जाले यदा पतन्ति, तदा सः महान्तं सन्तोषम् अनुभवति। एतादृशकार्यं यदि न करोति, तर्हि तस्मै भोजनं वा निद्रां वा न रोचते।

एवं हि सति कदाचित् सः दुष्टः धनिकः राजधानीं गत्वा, तत्र किमपि वाणिज्यं कृत्वा, एकस्यूतपूर्णानि सुवर्णनाणकानि सम्पादितवान्। किन्तु तावत् सुवर्णं प्राप्य ग्रामं प्रत्यागतः सः तूष्णीं न स्थितवान्।

"अहं शुनकान् विक्रीय एतावत्प्रमाणकं सुवर्णं सम्पादितवान्। राजधान्यां शुनकानां महती आवश्यकता अस्ति। तत्र बहवः शुनकग्राहकाः सन्ति" इति प्रत्येकस्य अपि ग्रामस्थस्य पुरतः कथितवान्। आश्चर्यचकिताः मुग्धाः ग्रामीणाः आसक्त्या कुतूहलेन च यदा शृण्वन्ति, तदा तस्य महती तृप्तिः।

तस्मिन् ग्रामे एकः दरिद्रः आसीत्। धनिकस्य वचनानि श्रुत्वा तस्य अपि धनार्जनस्य आशा उत्पन्ना। सः धनिकस्य समीपं गत्वा– "भोः आर्य, भवतः शुनकविक्रयणवचनं सत्यं वा? अहं दरिद्रः अस्मि भोः! अहम् अपि तथा कर्तुं शक्नोमि वा?" इति पृष्टवान्।

"सत्यं भोः, सत्यम्। मात्यास् महाराजः शुनकान् पुनः पुनः क्रीणाति। अधिकाधिकमूल्यं ददाति च। एतां वार्तां ज्ञात्वा मत्समीपे यावत् धनम् आसीत्, तत्सर्वं दत्त्वा शुनकान् क्रीत्वा नगरं नीतवान्। महाराजः तान् शुनकान् दृष्ट्वा महता सन्तोषेण अत्यधिकमूल्यं दत्त्वा सर्वान्

"हङ्गरी जानपदकथा"



शुनकान् क्रीतवान्। एतस्मात् वाणिज्यतः एव अहं एतावत् सुवर्णं प्राप्तवान्। मूलधनस्य षोडशगुणितः लाभः! भवान् तु अतीव दरिद्रः खलु? धनं सम्पादयितुम् इच्छति चेत्, शुनकान् क्रीत्वा नगरं नयतु। महाराजः निश्चयेन क्रीणाति" इति उक्तवान् धनिकः।

धनिकस्य वचनेषु दरिद्रस्य महान् विश्वासः सञ्जातः। यथा कथञ्चित् बहु धनं सम्पादनीयम् इति दरिद्रः निश्चयं कृतवान्। किन्तु तस्य समीपे एकं शुनकं क्रेतुं पर्याप्तं धनम् अपि न आसीत्। तस्य गृहे एकां दुर्बलां गां विना अन्यत् किमपि न आसीत्।

तथापि सः एतादृशं सुवर्णावकाशं त्यक्तुम् अनिच्छन्, तां दुर्बलां गाम् एव साप्ताहिकविपणिं नीत्वा विक्रीय, लब्धेन धनेन कतिपयशुनकान् क्रीतवान्। तेषां कण्ठेषु रज्जुबन्धनं कृत्वा, तान् महता प्रयासेन राजधानीं नीतवान्।

सः राजभवनं प्राप्य, यदा द्वारस्य समीपं गतवान्, तदा अन्तः प्रवेष्टुं द्वारपालकाः अवकाशं न दत्तवन्तः। धनिकेन वञ्चना कृता इति इदानीं दरिद्रः ज्ञातवान्। तस्य वृत्तान्तं श्रुत्वा राजभटाः यदा उच्चैः हसितवन्तः, तदा दरिद्रः अश्रूणि स्रावयन् रोदितुम् एव आरब्धवान्। यतः इदानीं सः सम्पूर्णरूपेण रिक्तहस्तः आसीत्। भिक्षायाचना एव तस्य कृते अवशिष्टः मार्गः आसीत्।

तस्मिन् समये राजभवनस्य अट्टे स्थितः महाराजः शब्दायमानान् शुनकान्, तैः सह स्थितं रोदनपरं कञ्चन दरिद्रं च दृष्ट्वा कुतूहलाविष्टः अभवत्। "तत्र किं प्रवर्तते इति ज्ञात्वा, तं दरिद्रम् अन्तः आनयन्तु" इति सेवकान् प्रेषितवान्।

दरिद्रः महाराजस्य समीपं गत्वा, स्वग्रामस्य धनिकस्य असत्यकथनम् उक्त्वा आत्मानं कथं वञ्चितवान् इति विचारं सविवरणं कथितवान्।

तस्य दरिद्रस्य उपरि महाराजस्य महती दया सञ्जाता। "अहं शुनकान् क्रीणामि इति विचारः यथार्थः एव" इति उक्त्वा, सः महाराजः दरिद्राय शतं सुवर्णनाणकानि दत्तवान्, तस्य धनिकस्य नामसङ्केतादिकं

स्वीकृतवान् च।

दरिद्रस्य सन्तोषस्य सीमा एव न आसीत्। महाभाग्यवान् सः स्वीयं ग्रामं प्रत्यागत्य, स्वीयशुनकविक्रयणविचारं, सुवर्णनाणकानां लाभविषयं च सर्वेषां पुरतः वर्णितवान्। ग्रामीणानां तु महत् आश्चर्यम् अभवत्।

सः दरिद्रः स्वीयवचनं श्रुत्वा जनानाम् उपहासपात्रं भवति इति धनिकेन चिन्तितम् आसीत्। किन्तु सः वस्तुतः एव शुनकानां वाणिज्यं कृत्वा सुवर्णं सम्पादितवान् इति ज्ञात्वा धनिकस्य अत्याश्चर्यं जातम्। 'तं वञ्चयितुं मया उक्तम् असत्यं यथार्थम् एव जातम्! तर्हि मया अपि एषः अवकाशः किमर्थं त्यक्तव्यः? अहं किमर्थं भाग्यहीनः भवेयम्?'

एवं चिन्तयन् धनिकः तूष्णीं स्थातुम् असमर्थः अभवत्। सद्यः एव सः स्वीयां सम्पूर्णां सम्पत्तिं विक्रीय लब्धेन धनेन सहस्रशः शुनकान् क्रीत्वा, तान् सर्वान् राजधानीं नीतवान्। किन्तु राजभवनस्य पुरतः तस्य, तदीयशुनकानां च कृते द्वारपालकैः प्रवेशः निराकृतः। धनिकः उच्चैः आक्रोशं कृतवान्। तस्य शुनकाः कर्णकठोरं भषन्ति स्म।

एतं कोलाहलं श्रुत्वा अट्टे स्थितः महाराजः शुनकस्वामिनम् अन्तः आनेतुम् आज्ञापितवान्।

"अहं शुनकानां विक्रयणार्थम् आगतवान् अस्मि" इति महाराजं निवेदितवान् धनिकः।

धनिकस्य नामश्रवणसमनन्तरम् एव महाराजः ज्ञातवान् यत् एषः एव तं दरिद्रं वञ्चितवान् इति। सः धनिकम्— "अहम् केवलम् एकवारम् एव शुनकान् क्रीतवान्। इदानीं मम शुनकानाम् आवश्यकता नास्ति। भवान् विलम्बेन आगतवान् अस्ति" इति उक्तवान्।

धनिकः यथा राजधानीं गतवान्, तथा एव स्वग्रामं प्रत्यागतवान्। तस्य सम्पूर्णा सम्पत्तिः शुनकाधीना अभवत्। तदनन्तरं बहुकालं यावत् तेन कृतं शुनकवाणिज्यं पुनः पुनः वर्णयन्तः ग्रामीणाः आनन्दम् अनुभवन्ति स्म।



# मानवता

पूर्वम् एकस्मिन् राज्ये क्षयरोगिणां सङ्ख्या दिने दिने प्रवृद्धा।

सकलेभ्यः प्रान्तेभ्यः राजोद्योगिनः, ग्रामप्रमुखाश्च द्वित्रवारम् एतद्विषये निवेदनपत्रं प्रेषितवन्तः।

किन्तु राजा एतत्सर्वं पश्यन् अपि मौनम् आसीत्। अन्ते एषः रोगः राजधानीम् अपि प्राविशत्। राजधान्यां बहवः क्षयरोगेण पीडिताः अभवन्।

इदानीं जागरितः राजा क्षयरोगनिवारणार्थम् एकं सुविशालं चिकित्सालयं निर्मापितवान्। 'कुलगुरोः अमृतहस्ततः एतस्य प्रारम्भोत्सवः कारणीयः' इति सङ्कल्पितवान् राजा। किन्तु कुलगुरुः, तपसः निमित्तम् अरण्ये निवसति स्म।

राजा सपरिवारं गत्वा कुलगुरुं साष्टाङ्गं नमस्कृत्य राज्यस्य परिस्थितिं च निवेद्य– "चिकित्सालयस्य प्रारम्भोत्सवः भवत्सन्निधाने एव भवतु" इति प्रार्थितवान्।

तदा कुलगुरुः– "राजन्! क्षयव्याधिनिमित्तं निर्मितस्य एतस्य चिकित्सालयस्य प्रारम्भोत्सवनिमित्तं न, अपि तु पिधानोत्सवनिमित्तम् आगमिष्यामि" इति उक्त्वा पुनः अपि ध्याने मग्नः अभवत्।

"क्षयरोगः यावत् राज्यतः समूलं न निर्गमिष्यति तावत् अहं राज्यप्रवेशं न करिष्यामि" इति सूच्यरूपेण उक्तवतः गुरोः वचनस्य श्रवणेन महाराजे विवेकः उदितः। सः तद्दिने एव समग्रे राज्ये तीव्रचिकित्सार्थं व्यवस्थां कारितवान्।





# उत्तररामायणम्

अगस्त्यमहामुनिः वालिसुग्रीवयोः वृत्तान्तं सविवरणं रामं कथितवान्।

मेरुपर्वतस्य उपरि विद्यमानेषु शिखरेषु मध्यमशिखरम् अतीव विलक्षणं विचित्रं च आसीत्। विशालवेदिकावत् स्थितेन मनोहरेण तेन प्रदेशेन देवताः अपि आकृष्टाः। तत्रैव सृष्टिकर्तुः ब्रह्मणः मन्त्रालोचनसभा अपि प्रचलति स्म।

एकस्मिन् दिने ब्रह्मा यदा योगध्यानमग्नः आसीत्, तदा तस्य नेत्रतः एकः जलबिन्दुः स्खलित्वा अधः पतितः। तस्मात् जलकणात् एकः वानरः उत्पन्नः।

ब्रह्मा तं दृष्ट्वा, ऋक्षरजाः इति तस्य नाम कृत्वा, किञ्चित्कालं यावत् मत्समीपं एव तिष्ठतु इति तम् आदिष्टवान्। तदनुसारेण सः वानरः मेरुपर्वते इतस्ततः अटन्, कन्दमूलादिकं भक्षयन् सन्तोषेण कालं यापयति स्म।

एवंरीत्या बहुदीर्घः कालः व्यतीतः। एकदा सः वानरः महत्या पिपासया पीडितः भूत्वा, जलम् अन्विष्यन्, मेरुपर्वतस्य उत्तरभागे वर्तमानम् एकं शिखरं गतवान्। तत्र अनेकपक्षिभिः व्याप्तः एकः सरोवरः दृष्टः। सन्तुष्टः वानरः निश्चिन्तभावेन सरोवरस्य पार्श्वे एकत्र उपविश्य, पिपासां परिहर्तुम् अवनतमुखः भूत्वा जलं दृष्टवान्। तत्र तस्य प्रतिबिंबं दृष्टम्। तत् दृष्ट्वा सः आश्चर्यचकितः अभवत्।

तस्मिन् सरोवरे स्वीयशत्रुः कश्चन अन्यः वानरः गुप्तरूपेण अन्तर्गतः स्यात् इति चिन्तयन्, एषः वानरः झटिति जलं प्रविश्य



सम्पूर्ण सरोवरम् अन्विष्टवान्। यदा सरोवरे अन्यः कोऽपि वानरः न दृष्टः, तदा "मां दृष्ट्वा भीत्या पलायितवान् प्रायः!" इति मत्वा निराशया पुनः तीरं प्रति आगतवान्।

सः सरोवरे सर्वत्र भ्रमणं कृत्वा, यदा तीरं प्रत्यागतवान्, तदा सुन्दरस्त्रीरूपं प्राप्तवान् आसीत्। तेन तस्य अपरिमितम् आश्चर्यम् अभवत्।

जगन्मोहनाकारा सा सुन्दरी वानरी तत्रैव उपविष्टा आसीत्। तदा इन्द्रः सूर्यः च ब्रह्मणः दर्शनार्थं तत्र आगतवन्तौ। तौ द्वौ अपि युगपत् एव तां वानरसुन्दरीं दृष्टवन्तौ। तयोः द्वयोः अपि तस्याः उपरि प्रीतिः सञ्जाता। अनन्तरं सा वानरी इन्द्रस्य स्नेहेन वालिनं प्रसूतवती। सूर्यस्य अनुग्रहेण सुग्रीवः जातः।

इन्द्रः स्वीयपुत्राय वालिने उपायनरूपेण सुवर्णकमलमालां दत्तवान्। सूर्यः स्वीयपुत्रम् उद्दिश्य हनूमतः निरन्तरं स्नेहं प्राप्नोतु इति आदिष्टवान्।

एतदनन्तरं तत् स्त्रीरूपम् अदृश्यम् अभवत्। तथा पुनः पूर्ववत् पुरुषरूपम् एव सम्प्राप्तम्। सः वानरः एव स्वीयं पुत्रद्वयं पोषितवान्।

ब्रह्मा कदाचित् स्वीयनेत्रजलात् जातं तं वानरम् आहूय "इदानीं भवान् स्वीयपुत्राभ्यां सह वानराणां नगरीं किष्किन्धां गच्छतु। इतःपरं तदेव भवतां राज्यम्" इति आज्ञापितवान्। ब्रह्मणः आज्ञां शिरसि धृत्वा ऋक्षरजाः पुत्राभ्यां सह किष्किन्धां गत्वा, राज्याभिषेकं प्राप्तवान्। सप्तद्वीपेषु स्थितानां सर्वेषां वानराणाम् अपि ऋक्षरजाः एव राजा अभवत्।

"भोः राम, इत्थं वालिसुग्रीवयोः माता पिता च ऋक्षरजाः एव" इति अगस्त्यः तां कथां समापितवान्।

रामपट्टाभिषेकस्य समाप्त्यनन्तरम् अनेकदिनानि यावत् सर्वे अतिथयः अभ्यागताः च सुखं कालं यापितवन्तः। अनन्तरम् एकैकशः तेषां निर्गमनम् आरब्धम्।

जनकमहाराजस्य प्रस्थानसमये भरतः तेन सह बहुदूरं यावत् गतवान्। केकयमहाराजेन सह लक्ष्मणः गत्वा तस्य

आपृच्छनं कृतवान्। भरतस्य आह्वानं प्राप्य रामपट्टाभिषेकार्थम् आगताः काशीराजः प्रतर्द्दनः, अन्यराजाः च स्वीयदेशान् प्रति प्रस्थितवन्तः।

लङ्कातः रामेण सह समागताः वानराः, विभीषणादिराक्षसाः च अयोध्यायां मासद्वयं ससन्तोषं यापयित्वा, ततः प्रस्थातुं सज्जीकरणम् आरब्धवन्तः।

लङ्कायां रावणमारणसमये सुग्रीवः, अङ्गदः, हनूमान् इत्यादयः महत् साहाय्यं कृतवन्तः आसन्। तान् परमस्नेहितान् रामः इदानीम् अत्यादरपूर्वकं सत्कृतवान्। तथैव विभीषणाय, तस्य अनुचरराक्षसेभ्यः च अनेकानि उपायनानि दत्तवान्। ते सर्वे ततः प्रस्थाय किष्किन्धां लङ्कां च प्रतिगतवन्तः।

अनन्तरं रामः सीतया सह वनविहारं कुर्वन्, मित्रादिभिः सह विविधगोष्ठीः चालयन्, यथाकालं राज्यकार्याणि परिशीलयन् कालं यापयति स्म। एवंरूपेण काले गच्छति सति सीता गर्भवती अभवत्। तेन रामस्य महान् प्रमोदः जातः।

अनन्तरं कदाचित् रामः सीतां "सीते, भवती इदानीं गर्भवती अस्ति किल। अतः एतस्मिन् समये या काचित् आशा, विशेषापेक्षा वा भवत्याः अस्ति चेत् वदतु। एतादृशसन्दर्भे आशानां गोपनं सर्वथा न करणीयम्। तासाम् आशानां पूरणम् अस्माभिः अपि अवश्यं करणीयम्" इति उक्तवान्।



सीता मन्दहासं प्रकटयन्ती अवनतमुखी भूत्वा "मम तु इदानीम् एतादृशी आशा उत्पन्ना अस्ति यत् तमसानदीं तीर्त्वा, गङ्गातीरे वर्तमानाः ऋष्याश्रमाः द्रष्टव्याः, तत्र ऋषिभिः दीयमानानि कन्दमूलफलानि खादनीयानि, तथा तत्रत्यवृक्षाणां छायासु विहारः करणीयः इति" इति उक्तवती।

"तत्र को वा क्लेशः अस्ति? एतत् कार्यं मम अपि सन्तोषप्रदम् एव। तथैव करोतु। भवत्याः इच्छानुसारेण श्वः एव भवतीं तत्र प्रेषयिष्यामि" इति उक्तवान् रामः।

सीताम् एतत् उक्त्वा रामः स्वीयमित्राणां समीपं गत्वा, तत्र विनोदसत्कथामग्नः सन् उपविश्य, तत्रत्य भद्रनामकं दृष्ट्वा "भोः भद्र, भवान् वार्तासङ्ग्रहकारेषु प्रमुखः



अस्ति। अस्माकं देशस्य सर्वेषु भागेषु भवान् सञ्चरति खलु? मद्विषये, सीतायाः विषये, मम मातॄणां, भ्रातॄणां च विषये अस्माकं प्रजानाम् अभिप्रायः कीदृशः अस्ति? जनाः किं वदन्ति?'' इति पृष्टवान्।

भद्रः अञ्जलिबद्धः भूत्वा ''प्रजाः तु किमपि किमपि वदन्ति कदाचित्। प्रायः रावणसंहारस्य विचारः एव तासां वार्तालापानां विषयः भवति। सः तावत् अवश्यवक्तव्यः विषयः इति तु न अहं चिन्तयामि'' इति उक्तवान्।

भद्रः किमपि गोपायति इति रामस्य सन्देहः अभवत्। ''भद्र, वास्तविकं विषयं यथावत् वदतु। किमपि न गोपायतु। विषयः साधुः वा अस्तु, असाधुः वा। चिन्ता मास्तु। निर्भयं निश्शङ्कं च वदतु'' इति पृष्टवान् रामः।

''रामः समुद्रस्य सेतुं निर्मापितवान् इति, महाबलशालिनं रावणं समूलं हतवान् इति च जनाः बहधा श्लाघनं कुर्वन्ति। वयं भाग्यवन्तः धन्याः च इति ते महता अभिमानेन वदन्ति। किन्तु 'रावणः सीतां स्वीये अङ्के उपवेश्य लङ्कां नीतवान् किल। अनन्तरं दीर्घकालं यावत् सीता रावणाधीना आसीत्। तादृशी अपि रामेण पुनः स्वीकृता इति तु रामस्य एका न्यूनता। इतःपरं यदि अस्माकं पत्न्यः अपि यत्र कुत्रापि स्थित्वा आगच्छन्ति, तर्हि अस्माभिः अपि तूष्णीं सोढव्यं भवति। न्यायनिर्णयं वक्तुं रामं कथं वा पच्छाम?' इति जनाः समूहरूपेण परस्परं भाषन्ते प्रभो। तेषां वचनानि श्रोतुं महान् खेदः भवति'' इति उक्तवान् भद्रः।

तस्य वचनं श्रुत्वा रामः मनसि एव तीव्रां वेदनाम् अनुभवन्, अन्यस्नेहितान् उद्दिश्य ''तस्य वचनं सत्यं वा?'' इति पृष्टवान्।

सर्वे अवनतमुखाः भूत्वा मन्दस्वरेण ''सत्यम् एव'' इति उक्तवन्तः।

रामः तान् सर्वान् प्रेषयित्वा, समीपं स्थितं द्वारपालकम् आहूय ''लक्ष्मणं, भरतं, शत्रुघ्नं च आनयतु'' इति उक्तवान्।

ते त्रयः अपि शीघ्रं रामस्य समीपम् आगतवन्तः। कान्तिहीनः, अश्रुभरित-लोचनः रामः स्वीयान् भ्रातॄन् समालिङ्ग्य,

आसनेषु उपवेश्य, सीतायाः विषये उत्पन्नं जनापवादविचारं सर्वं तान् कथितवान्।

''सीता दोषरहिता, परमपवित्रा च इति अग्निना, इतरदेवताभिः च उक्तम्। मम अन्तरात्मा अपि एतद् एव वदति। लक्ष्मण, भवतः पुरतः एव एषः वृत्तान्तः प्रवृत्तः खलु? अतः एव अहं सीताम् अयोध्याम् आनीतवान्। किन्तु इदानीम् एतम् अपवादं कथम् अहं सहेयम्? असहनीयं दुःखम् इदम्। युष्मान्, मम प्राणान् च त्यजेयम्। किन्तु अपकीर्तिं सोढुम् अहं सर्वथा न शक्नोमि। एतदपवादापेक्षया अधिकदुःखदायकं किमपि नास्ति। अतः उपायान्तराभावात् सीता इदानीं मया त्यक्तव्या। अतः लक्ष्मण, श्वः प्रातः भवान् सीतां रथे आरोप्य, तमसानदीतीरे वर्तमाने वाल्मीकेः आश्रमप्रदेशे त्यक्त्वा आगच्छतु। मम वचनस्य विरोधः मास्तु'' इति एतावद् उक्त्वा रामः दीर्घश्वासं विमुञ्चन् ततः उत्थाय अन्तःपुरं गतवान्।

परेद्युः सूर्योदयसमये एव लक्ष्मणः सुमन्त्रस्य समीपं गतवान्। लक्ष्मणस्य वचनानि, व्यवहाराः च अतिदीनाः आसन्। सः सुमन्त्रं– ''सीतां मुनीनाम् आश्रमस्थाने त्यक्त्वा आगच्छतु इति रामेण आज्ञाप्तः अस्मि। अतः अहम् इदानीम् एव सीतया सह गच्छामि। शीघ्रं रथं सज्जीकरोतु। सीतायाः कृते रथे मृदुलम् आसनं स्थापयतु'' इति उक्तवान्।



सुमन्त्रः अविलम्बेन रथं सज्जीकृत्य आनीतवान्। तत्क्षणे एव लक्ष्मणः सीतायाः समीपं गत्वा– ''मातः, महाराजेन उक्तं यत् भवती ऋष्याश्रमान् द्रष्टुम् इच्छति इति। महाराजः माम् आज्ञापितवान् अस्ति। अतः इदानीं तमसानदीतीरे वर्तमानान् आश्रमान् प्रति गच्छाम'' इति उक्तवान्।

तस्य वचनानि श्रुत्वा सीता आनन्दिता अभवत्। सा बहुमूल्यानि दुकूलानि, आभरणानि च मुनिपत्नीभ्यः दातुं गृहीत्वा, रथम् आरुह्य लक्ष्मणेन सह प्रस्थितवती।

वेगेन रथे गच्छति सति, सीता अनेकानि दुश्शकुनानि दृष्टवती। एतं विचारं सीता लक्ष्मणं कथयित्वा ''किं सर्वे मम श्वश्रूजनाः स्वस्थाः सन्ति खलु?'' इति पृष्टवती।



मम सन्तोषभङ्गम् उत्पादयति? शीघ्रं मां तमसानदीं तारयित्वा, मुनीनाम् आश्रमान् नयतु। मुनीनां पत्नीभ्यः एतानि उपायनानि दास्यामि। एकां रात्रिं तत्र नीत्वा, परेद्युः अयोध्यां प्रतिगच्छाम। रामं विना आगतायाः मम अपि मनसि खेदः अस्ति'' इति उक्तवती।

लक्ष्मणः अश्रूणि मार्जयित्वा, समीपे स्थितं नाविकम् आहूय, नौकां सज्जीकर्तुम् आदिष्टवान्। अनन्तरं सीतया सह नौकाम् आरुह्य नद्याः अन्यत् तीरं प्राप्तवान्। सुमन्त्रः रथस्य समीपे एव स्थितवान्।

तमसानद्याः अन्यस्मिन् तीरे नौकातः अवतीर्य लक्ष्मणः सीतायाः पुरतः अञ्जलिबद्धः स्थित्वा– ''सीतादेवि! अग्रजः शूलेन मम हृदयम् एव विद्धवान्। एतादृशपापकार्यापेक्षया मम तु मरणम् एव वरम्'' इति वदन् दुःखविवशः भूत्वा तत्रैव भूमौ निपत्य उपविष्टवान्।

तस्याः वचनेन कम्पमानं हृदयं, मनसः खेदं च यथाकथञ्चित् अन्तः एव निगृह्य, मुखे हासं प्रकटयितुं प्रयतमानः लक्ष्मणः ''ते सर्वे स्वस्थाः सन्ति'' इति एतावदेव उक्तवान्।

सम्पूर्णं दिनं प्रयाणं प्राचलत्। यावत् रात्रिः सन्निहिता तावत् गोमतीतीरं प्राप्तम्। तां रात्रिं तत्रैव यापयित्वा, प्रातः पुनः ततः प्रस्थाय, मध्याह्नसमये तमसातीरं ते प्राप्तवन्तः। तमसातीरदर्शनेन लक्ष्मणः दुःखावेगं सोढुम् असमर्थः अभवत्।

तं दृष्ट्वा सीता ''किम् इदं लक्ष्मण! किमर्थं रोदिति? किम् अश्रुकारणम्? बहुकालानन्तरं मम इच्छापूरणं प्राप्य अहम् आनन्दिता अस्मि। किमर्थं भवतः दुःखेन

तस्य परिस्थितिं दृष्ट्वा सीता भीत्या– ''लक्ष्मण, भवतः वचनानाम् अभिप्रायः न अवगतः। केनापि कारणेन भवान् उद्विग्नः अस्ति। भवतः दुःखस्य कारणं किम् इति स्पष्टं वदतु। भवतः अग्रजस्य नाम्ना पृच्छामि'' इति पृष्टवती।

तदा लक्ष्मणः सीताम्– ''अम्ब, यदा मम अग्रजः रामः मित्राणां मध्ये उपविश्य वार्तालापमग्नः आसीत्, तदा भवत्याः विषये उत्पन्नं भयङ्करं लोकापवादं श्रुतवान्। तेन

अग्रजस्य हृदयं सन्तप्तम् अभवत्। अतः सः भवतीं परित्यक्तवान्। अम्ब! भवत्याः कोऽपि दोषः नास्ति इति सः सम्यक् जानाति। अहम् अपि जानामि। किन्तु अपवादभयात् सः एवं कृतवान्। भवतीम् अत्रैव परित्यज्य मया इदानीम् अयोध्या गन्तव्या। किमपि विरोधम् अकुर्वन् एतत् कार्यं करोतु इति रामः माम् आज्ञापितवान्। भवती स्वीयं हृदयं दृढं करोतु। अधिकव्यथां न प्राप्नोतु। पुण्यप्रदेषु एतेषु ऋष्याश्रमेषु एव तिष्ठतु। वाल्मीकिमहामुनिः अस्माकं जनकस्य आप्तस्नेहितः। तम् आश्रित्य सुखं जीवतु अम्ब!'' इति उक्तवान्।

एतानि वचनानि श्रुत्वा सहसा सीता स्तम्भीभूता अभवत्।

किञ्चित्कालानन्तरं सा पूर्वस्थितिं प्राप्य सदैन्यं रोदनं कुर्वती— ''लक्ष्मण! कष्टानि अनुभोक्तुम् एव अहं जन्म प्राप्तवती। पूर्वस्मिन् जन्मनि प्रायः मया अनेकानि पापकर्माणि कृतानि। ययोः कयोश्चित् दम्पत्योः मध्ये मया विरसः उत्पादितः स्यात्। वनवाससमये रामः मम समीपे एव स्थित्वा सान्त्वनवचनानि वदति स्म। तथापि अहं दुःखिता आसम्। तादृशः रामः अपि इतःपरं मम समीपे न भविष्यति चेत्, एषः अरण्यवासः कीदृशः भवेत् इति आलोचयतु। मम दुःखं कस्य पुरतः निवेदयेयम्? भवत्याः पतिः भवतीं किमर्थं परित्यक्तवान् इति मुनयः पृच्छन्ति चेत् किं वदेयम्? एतस्यां नद्यां पतित्वा मरणं प्राप्तुं शक्यते। किन्तु तेन भवतां वंशस्य अपकीर्तिः अधिकतरा भविष्यति।

पूर्वापेक्षया अधिकः उपहासः भवेत्। भवतः अग्रजस्य आज्ञायाः अनुसरणम् एव भवतः धर्मः। अतः वत्स लक्ष्मण, मम श्वश्रूजनान् दृष्ट्वा मम नमस्कारान् वदतु। सर्वदा महाराजस्य क्षेमम् अभिलषन्ती तं साष्टाङ्गं नमस्करोमि इति तं वदतु। तस्य उपरि आपतितस्य अपवादस्य परिहरणं मम अपि अवश्यकर्तव्यकर्म एव। सधैर्यं राज्यपालनं कुर्वन्, भ्रातॄन् प्रजाः च समानरूपेण पश्यन्, लोके असदृशीं कीर्तिं रामः प्राप्नोतु इति मम इच्छा। मम एताम् इच्छां तम् अवश्यं निवेदयतु'' इति उक्तवती।





# मत्स्यकन्या

धवलगिरिराजः वीरसिंहः कदाचित् सायङ्काले राजोद्याने विहरन् आसीत्। तदा कश्चन रक्षकभटः समीपम् आगत्य विनयेन नमस्कृत्य निवेदितवान्– "महाप्रभो! भवतः दर्शनार्थं कश्चन धीवरः आगतः अस्ति। भवद्दर्शनं कर्तुम् इच्छति च" इति।

तदा महाराजः असमाधानेन उक्तवान्– "धीवरः वा? विहारसन्दर्भे किं दर्शनम्? श्वः सभासन्दर्भे आगन्तुं सूचयतु" इति।

भटः ततः निर्गत्य क्षणकालानन्तरं पुनः आगत्य– "महाराजाय कोऽपि अपूर्वः विषयः निवेदनीयः अस्ति। एतदर्थम् एव अहं सुदूरात् ग्रामतः दिनद्वयं यावत् पादसञ्चारं कृत्वा आगतवान् अस्मि। सः तावन्मुख्यः विषयः यत् मया इदानीम् एव राज्ञा निवेदनीयः इति वदति सः धीवरः" इति निवेदितवान्।

वीरसिंहः असमाधानेन एव– "अस्तु तर्हि। तम् अत्र प्रेषयतु" इति उक्तवान्।

किञ्चित्कालानन्तरं पञ्चविंशति-वर्षीयं धीवरयुवकं महाराजसमीपम् आनीय प्रतिगतवान् सः रक्षकभटः।

धीवरः युवकः महाराजं भक्त्या नमस्कृत्य– "मम नाम सिंहाचलः इति, महाप्रभो!" इति उक्तवान्।

वीरसिंहः तं परीक्षादृष्ट्या पश्यन्– "भवान् सिंहाचलः वा भवतु, गरुडाचलः वा भवतु, मम किं तेन? आत्मनः नामनिवेदनार्थम् एव अत्र आगतवान् वा भवान्?" इति पृष्टवान्।

"क्षन्तव्यः अहं महाप्रभो! विहारसमये दर्शनार्थं न आगन्तव्यम् इति अहं जानामि। महत्त्वपूर्णः विषयः निवेदनीयः इत्यतः अहम् इदानीम् आगतवान्। मम ग्रामसमीपे समुद्रतीरे मत्स्यकन्या अस्ति" इति उक्तवान् सः धीवरयुवकः।

"मत्स्यकन्या! कुत्र दृष्टा सा?" इति आश्चर्यपूर्णः उद्गारः सहजतया आगतः



वीरसिंहस्य मुखतः।

"मम ग्रामसमीपे एव! मया सह वार्तालापं कृतवती सा। 'लोके यत् यत् प्रवर्तति तत्सर्वं वदामि' इति वदति सा" इति उक्तवान् सः धीवरयुवकः।

"मत्स्यकन्या भवता दृष्टा, तया सह वार्तालापः अपि कृतः! अत्याश्चर्यकरम् एतत्। सा कथम् अस्ति? किं सम्भाषणं प्रवृत्तम्? निस्सङ्कोचं वदतु भवान्" इति कुतूहलेन उक्तवान् वीरसिंहः।

तदा सिंहाचलः निवेदितवान्– "गतसप्ताहे कदाचित् भोजनं समाप्य अहं मध्याह्नसमये समुद्रप्रयाणार्थम् उद्युक्तः। तदा वृक्षाणां मध्यतः किलकिलेति हासध्वनिः श्रुतः। अहं तत्समीपं गत्वा दृष्टवान्। तत्र कटिपर्यन्तं स्त्रीरूपिणीं ततोऽप्यधः मीनशरीरवतीं काञ्चित् मत्स्यकन्याम् अहं दृष्टवान्। सा समुद्रात् उत्थाय वृक्षाणां मध्ये सञ्चरन्ती आसीत्।

सा मत्स्यकन्या मां दृष्ट्वा– "किं भोः, प्रपञ्चः एव अत्र भूमौ सुखेन अस्ति। भवान् तु तत्र समुद्रं गच्छति? तत्र गत्वा किं जानाति?" इति पृष्टवती।

अहं विचित्ररूपिणीं तां मत्स्यकन्याम् आश्चर्येण पश्यन्– "तत्पार्श्वे स्थितायां भूमौ जीवितुम् एतत्पार्श्वे स्थितः समुद्रः एव शरणं मम। भवती तु समुद्रवासिनी। भूमौ निवसतां जनानां कष्टकार्पण्यं भवती किं जानाति?" इति पृष्टवान्।

तदा सा मत्स्यकन्या मधुरं हसन्ती– "मां किमिति चिन्तयति? समुद्रे निवसन्ती अपि अहं प्रपञ्चे कोणे कोणे यद्यत् प्रवर्तते तत्सर्वं वक्तुं शक्नोमि" इति उक्तवती।

"एवं वा? एवं तर्हि एतत्समये वीरसिंहमहाराजः किं कुर्वन् अस्ति इति वदतु, पश्यामि" इति उक्तवान् अहम्।

मत्स्यकन्या क्षणकालं नेत्रे निमील्य, पुनः उद्घाट्य– "इदानीं भवतः वीरसिंहमहाराजः महाराज्ञीम् 'इतोऽपि पायसम् अपेक्षितम्' इति वदन् अस्ति" इति उक्तवती।

"भवती किमपि उक्तवती। तत् सत्यम् इति कथं विश्वसिमि अहम्? अस्तु तावत्,

पश्यामि" इति उक्त्वा अहं मीनग्रहणार्थं समुद्रं प्रविष्टवान्। कार्यं समाप्य यदा अहं तीरं प्राप्तवान् तदा अपि सा मत्स्यकन्या तत्रैव आसीत्।

सा मां दृष्ट्वा– "भवतः महाराजः इदानीं राज्ञया परिविष्टं हरिणमांसोपेतं सारम् आकण्ठं भुक्त्वा 'पर्याप्तम्' इति वदन् अस्ति। मया यदा दिव्यदृष्ट्या दृष्टं तदा सर्वदा भवतः महाराजः भोजनं कुर्वन् अस्ति। तस्य भोजनं विना अन्यत् कार्यं नास्ति इति भाति" इति उक्त्वा समुद्रं प्रविश्य अदृश्यतां गता।

तद्दिने रात्रौ यथापूर्वम् अहं शयनं तु कृतवान्, किन्तु मत्स्यकन्यायाः विषयम् एव चिन्तयतः मम निद्रा न आगता एव। 'मत्स्यकन्यातः मम किमपि प्रयोजनं न स्यात्, तथापि एतं विषयं महाराजाय यदि निवेदयेयं तर्हि तस्य उपकाराय भवेत्। शत्रुराजानां चलनवलनानि, द्रोहिणां कुतन्त्राणि, दुष्टानां दुराचाराः इत्यादयः पूर्वम् एव ज्ञातुं शक्यते चेत् देशस्य एव हितं किल?' इति चिन्तयन् अहं भवतः समीपं प्रति प्रस्थितः।

अत्र आगन्तुं मम ग्रामतः समीचीनः मार्गः नास्ति तथापि महता श्रमेण अत्र आगतवान्" इति।

सिंहाचलेन उक्तं सर्वं श्रुत्वा राजा आश्चर्यचकितः। तस्य कुतूहलः अपि प्रवृद्धः। 'यदा अहं भोजनं करोमि तत्सन्दर्भे तत्र बाह्यः कोऽपि न भवति। तथापि राज्ञीं



प्रति मया यत् उक्तम्, इतोऽपि पायसम् अपेक्षितम् इति, हरिणमांसोपेतः सारः पर्याप्तः इति च, तत् मत्स्यकन्यया कथं ज्ञातम्? सा निश्चयेन दिव्यदृष्टियुता एव' इति आलोचितवान् महाराजः।

सिंहाचलः महाराजं पुनः एकवारं नमस्कृत्य– "महाराज! ग्रामं प्रतिगन्तुम् अनुज्ञादानेन अनुग्रहणीयः अहम्" इति प्रार्थितवान्।

"अस्तु, भवान् गच्छतु। अहं द्वित्रेषु दिनेषु भवतः ग्रामम् आगमिष्यामि" इति उक्त्वा वीरसिंहः सेवकम् आहूय– "एतस्मै सिंहाचलाय शतं सुवर्णनाणकानि दत्त्वा प्रेषयतु" इति आज्ञापितवान्।

अनन्तरदिने एव वीरसिंहमहाराजस्य



प्रयाणम् आरब्धम्। केचन सैनिकाः त्वरया सिंहाचलस्य ग्रामं गत्वा राजपरिवारस्य वसत्यर्थं समुद्रतीरे पटमण्डपान् निर्मितवन्तः। अन्ये केचन राजधानीतः तत्कुग्रामपर्यन्तं राजप्रयाणयोग्यम् उत्तमं मार्गं निर्मितवन्तः।

राजधानीतः महाराज्ञ्या सह प्रस्थितः महाराजः द्वितीये दिने तं ग्रामं प्राप्तवान्। मत्स्यकन्या यत्र दृष्टा तं प्रदेशं प्रति महाराजं नीत्वा सिंहाचलः उक्तवान्– "महाराज! मया अत्र एव मत्स्यकन्यया सह वार्तालापः कृतः" इति।

तद्दिने अनन्तरदिने वा बीरसिंहः मत्स्यकन्यां न दृष्टवान्। एवम् एव चत्वारि दिनानि अतीतानि। तथापि मत्स्यकन्यायाः दर्शनं नास्ति। इतःपरम् अत्र निवासेन प्रयोजनं नास्ति इति विचिन्त्य महाराजः राजधानीं गन्तुम् उद्युक्तः। तत्समये सिंहाचलः महाराजम् एकान्ते दृष्ट्वा उक्तवान्– "महाप्रभो! मद्विषये भवान् यदि न कुप्येत् तर्हि अहं वस्तुस्थितिं निवेदयितुम् इच्छामि" इति।

"वस्तुस्थितिः? निवेदयतु, यदि सः विषयः क्षमार्हः स्यात् तर्हि क्षमा अस्ति एव" इति उक्तवान् महाराजः।

"मत्स्यकन्या मया कल्पनया सृष्टा। वस्तुतः सा नास्ति एव। मया सा न दृष्टा अपि" इति उक्तवान् सिंहाचलः।

बीरसिंहः कोपमिश्रितेन आश्चर्येण पृष्टवान्– "एतादृशीम् असत्यकथां किमर्थं कल्पितवान्?" इति।

तदा सिंहाचलः भीत्या एव सर्वं निवेदितवान्– "महाराज्ञ्याः आप्त-सेविकायाः लवङ्गीनामिकायाः दास्याः जन्मस्थलं एषः एव ग्रामः। सा मम समीपबन्धुः अपि।

अहं तां परिणेतुम् इच्छामि। आवयोः परिणयविषये ज्येष्ठैः अनुमतिः दत्ता अस्ति अपि। लवङ्ग्याः मातापितरौ राजधान्यां निवसतः। 'विवाहानन्तरं भवद्गृहे स्थातव्यं भवति। इतः मातृगृहं गन्तुं महत् कष्टं भविष्यति। यतः भवतः ग्रामतः राजधानीं प्रति सामान्यः मार्गः अपि नास्ति। अतः विवाहानन्तरकालीनं जीवनं कष्टकरम् एव'

इति कदाचित् खेदेन उक्तवती लवङ्गी।

तदा अहम्– "महाराजः यदि कदाचित् अत्र आगच्छेत् तर्हि इतः राजधानीपर्यन्तम् उत्तमः मार्गः निर्मितः भवेत्" इति उक्तवान्।

"भवदुक्तं सत्यम् एव। किन्तु महाराजः किमर्थं वा कोणे स्थितम् एतं ग्रामम् आगच्छेत्?" इति पृष्टवती लवङ्गी।

अहम् एतदनन्तरं बहु चिन्तितवान्। अन्ते कुत्रापि श्रुतां कथां स्मरन् मत्स्यकन्यायाः कथाम् उपकल्पितवान्" इति।

सिंहाचलेन उक्तं सर्वम् आसक्त्या श्रुत्वा बीरसिंहः हसन् पृष्टवान्– "अहं कुपितः भवेयम् इति जानन् अपि भवान् माम् एतावत्पर्यन्तम् आनीतवान्। धैर्यशाली भवान्। तदस्तु, मम राज्ञ्याः च मध्ये प्रवृत्तः वार्तालापः भवता कथं ज्ञातः?" इति।

"कदाचित् वार्तालापसन्दर्भे तत् घटनाद्वयम् अपि महाराज्ञी एव लवङ्गीम् उक्तवती आसीत्। लवङ्गी मां तत् उक्तवती। अहम् उपायेन तत् घटनाद्वयं मत्स्यकन्यायाः कथायां योजितवान्। मत्स्यकन्यायाः कथां कल्पयता मया महान् अपराधः कृतः, सत्यम्। किन्तु तेन राजधानीतः मद्ग्रामपर्यन्तम् उत्तमः मार्गः निर्मितः अभवत्। यदि अहं क्षमार्हः तर्हि क्षन्तुम् अर्हति भवान्" इति उक्तवान् सिंहाचलः।

बीरसिंहः क्षणकालं मौनं स्थित्वा तदनन्तरम् उक्तवान्– "भवान् लवङ्गी च चतुरौ। भाविपत्न्याः साहाय्येन भवान् अद्भुतं रूपकम् एव अभिनीतवान्। एतत् यद्यपि औद्धत्यं, तथापि एतेन अहं युक्तं पाठं पठितवान्। यः राजा भवति, तेन तदा तदा देशपर्यटनं करणीयम्। तदा एव सः प्रजानां सुखदुःखादिकं ज्ञातुं शक्नोति। इतःपरम् अहं मासे एकवारं वा तत्र तत्र सञ्चारं करिष्यामि। मम कर्तव्यं ज्ञापितवान् भवान्" इति। अनन्तरं कण्ठे स्थितम् एकं हारं निष्कास्य सिंहाचलस्य हस्ते अर्पयन्– "भवतोः विवाहार्थम् एतत् मम उपायनम्" इति हसन् उक्तवान्।





# प्रत्युपकारः

## ( ३ )

**लो**के महापुरुषाः इव व्यवहरन्तः ये दुष्टकार्याणि अपि कुर्वन्ति तेषु द्वैविध्यं दृश्यते। तत्र एकविधाः तु – सूक्ष्मग्राहिणः चतुरमतयः च। ते जनानां पुरतः मधुराणि वचनानि वदन्ति। जनानां श्रमस्य दुरुपयोगं स्वीकुर्वन्तः स्वयं सुखेन जीवन्ति।

द्वितीयविधाः दुर्मार्गिणः बुद्धिमन्तः न भवन्ति। ते जनान् सदा पीडयन्तः सन्तोषम् अनुभवन्ति। बुद्धिमन्तः दुष्टाः तु प्रजाभ्यः पीडिताः न भवन्ति। सामान्याः जनाः अपि यदा विवेचनशीलाः भवन्ति तदा केवलम् अपायः तेषाम्। किन्तु अल्पबुद्धिमन्तः दुष्टाः सदा जनैः पीडिताः भवन्ति। यतः जनाः तेषां प्रत्यक्षपीडां सोढुं न शक्नुवन्ति किल? कदाचित् जनाः सम्भूय एतादृशदुष्टानां विरोधम् आचरन्ति।

एतादृशी परिस्थितिः एव शतानन्दवन-ग्रामे अपि उत्पन्ना। ग्रामज्येष्ठौ तु बुद्धिमन्तौ दुष्टौ। किन्तु तयोः पुत्रौ तु पूर्वोक्तरूपेण अल्पबुद्धिमन्तौ दुष्टौ। स्वपित्रोः विषये मूर्खाः जनाः आदरभावं यत् प्रदर्शयन्ति तस्य आधारेण दौष्ट्यम् आचरन्तौ अपि तौ निरातङ्कं जीवतः। परपुष्टसस्यस्य इव जीवनं तयोः।

तौ पुत्रौ एकप्राणौ इव सदा सहैव तिष्ठतः। कदाचित् अन्यस्य वाटिकां प्रविश्य फलानि अपहरतः। पुनः कदाचित् अन्यस्य गृहं प्रविश्य अलङ्कारादिवस्तूनि नाशयतः। विना कारणं बालानां पीडनं तयोः आनन्ददायकः विषयः। तयोः दर्शनमात्रेण ग्रामीणाः भीताः भवन्ति स्म।

पुत्रयोः व्यवहारः ग्रामज्येष्ठयोः श्रुतिपथम् अपि सहजतया आगतः। तदा तौ स्वपुत्रौ बोधितवन्तौ– "भवन्तौ अन्येषां

वाटिकाः प्रविश्य फलपुष्पादीन अपहरतः। एतावत् एव न पर्याप्तम्। गोकुलीयेन गोपालकृष्णेन इव क्षीरनवनीतादीनि अपि अपहरणीयानि। तदा एव अस्माकं भविष्यम् उज्ज्वलं भवेत्" इति।

पित्रोः मार्गदर्शनं पुत्रयोः इष्टकरम् एव अभवत्। अतः तौ पित्रोः वचनानुगुणम् एव आचरितुम् आरब्धवन्तौ। अल्पेषु एव दिनेषु एतयोः पीडातः ग्रामीणाः सर्वे श्रान्ताः। पुरुषाः स्त्रियः सर्वे सम्भूय ग्रमज्येष्ठयोः समीपं गत्वा स्वकीयं कष्टं निवेदितवन्तः।

ग्रामज्येष्ठौ ग्रामीणानां वचनानि शान्ततया श्रुतवन्तौ। अनन्तरं शान्ततया एव उक्तवन्तौ च– "आवयोः पुत्रयोः श्रीकृष्णस्य अंशः अस्ति। अतः एव तौ तथा दुष्टकार्याणि आचरतः। द्वापरयुगे श्रीकृष्णः यदा दौष्ट्यम् आचरति स्म तदा गोपिकाः एवम् एव यशोदासमीपं गत्वा आक्षेपं निवेदयन्ति स्म। किन्तु वस्तुतः तु ताः श्रीकृष्णे प्रीतिमत्यः एव। भागवतस्य कथां न श्रुतवन्तः इति कारणतः भवन्तः उद्विग्नाः भवन्ति। अद्य आरभ्य भवन्तः अस्माकं गृहम् आगत्य भागवतपुराणवाचनं शृण्वन्तु। तेन पुण्यं सम्पादितं भवति, बुद्धिः विकसति, सन्तोषश्च जायते" इति।

ग्रामज्येष्ठयोः पुत्रयोः पीडाः तु यथापूर्वम् अनुवृत्ता। पूर्वोक्तप्रकरणतः ग्रामीणैः प्रतिदिनम् अपि गृहकार्यं विहाय भागवतश्रवणं करणीयम् आपतितम्। किन्तु एवं बहूनि दिनानि यावत् न प्रवृत्तम्।



भागवतश्रवणसन्दर्भे ग्रामीणानां मनसि विविधाः संशयाः उत्पद्यन्ते स्म। ते परस्परं तद्विषये चर्चां कुर्वन्ति स्म।

"श्रीकृष्णः बाल्ये अनेकाः कुचेष्टाः आचरितवान्। चौर्यं कृतवान् च। किन्तु तस्मिन् एव सन्दर्भे अद्भुतकार्याणि अपि कृतवान्। स्वकीयाः यदा सङ्कटे पतिताः आसन् तदा तान् सः रक्षितवान्। एतौ उद्धतौ बालौ तु कदापि ग्रामीणान् न उपकुरुतः। न वा कमपि सन्तोषयतः किल?"

बहवः ग्रामस्थाः स्वकीयाम् एतां समस्यां ग्रामज्येष्ठौ निवेदितवन्तः। तत् श्रुत्वा तौ पुनः चिन्तनं कृतवन्तौ।

"भवतां सन्देहाः युक्ताः एव सन्ति। अद्य रात्रौ तपः कृत्वा एतस्याः समस्यायाः



परिहारं कथयिष्यावः'' इति उक्तवन्तौ तौ ग्रामज्येष्ठौ। तपसः नाम श्रुत्वा आश्चर्यम् अनुभवन्तः ग्रामीणाः मौनम् आश्रितवन्तः।

ग्रामीणानां निर्गमनानन्तरं ग्रामज्येष्ठयोः एकः अपरम् उक्तवान्– ''इदानीं किं करणीयम्? पुत्रयोः व्यवहारतः आवयोः अधिकारस्थानस्य एव विपत्तिः आगता किल? अहं चिन्तयामि – पुत्रौ कठोरतया बोधनीयौ इति। अन्यथा ग्रामीणाः तृप्ताः न भवेयुः'' इति।

अपरः ज्येष्ठः क्षणकालम् आलोच्य उक्तवान्– ''आवयोः कुमारौ आवयोः वचनं न अङ्गीकुरुतः। अङ्गीकुरुतः चेदपि तौ क्लेशयितुम् अहं तु न इच्छामि। एतदर्थम् अन्यः एव उपायः चिन्तनीयः। वस्तुतः पुराणकथनकार्यक्रमेण एव एतत्सर्वं सम्पन्नम्। पुराणकथाः उक्त्वा जनान् मोहयित्वा तेषां विरोधं निर्मूलयितुं वयं प्रयत्नं कृतवन्तः। किन्तु पुराणश्रवणतः तेषां चिन्तनशक्तिः अधिका जाता। विरोधं शब्दैः प्रकटयितुम् अपि समर्थाः जाताः ते। अतः इतःपरं पुराणकथाकथनं त्यक्तव्यम् अस्माभिः। इष्टार्थसाधनार्थम् अन्यः एव उपायः चिन्तनीयः'' इति।

तद्दिने तौ एतद्विषये एव चिन्तयन्तौ आस्ताम्। बहुचिन्तनानन्तरं तयोः मनसि कश्चन उपायः स्फुरितः। अनन्तरदिने सायङ्काले ग्रामीणाः यदा पुराणश्रवणार्थं समागताः तदा 'भवतां सन्देहं परिहरावः' इति उक्त्वा पुराणस्थां जयविजयकथां श्रावितवन्तौ तौ।

''जयविजयौ वैकुण्ठे श्रीविष्णोः द्वारपालकौ आस्ताम्। एकदा सनकसनन्दनादयः महर्षयः विष्णोः दर्शनार्थं वैकुण्ठम् आगतवन्तः। तदा द्वारपालकौ जयविजयौ उक्तवन्तौ– ''तिष्ठन्तु, अन्तः प्रवेशः इदानीं निषिद्धः। किञ्चित्कालं प्रतीक्षा करणीया'' इति।

प्रवेशनिराकरणेन कुपिताः सनकादयः– ''भवन्तौ राक्षसौ भवताम्'' इति जयविजयौ शप्तवन्तः। शापविमोचनार्थं जयविजयौ विष्णुं शरणं गतवन्तौ। तदा विष्णुः उक्तवान्– ''अत्र भवतोः कोऽपि अपराधः नास्ति। तथापि मुनीनां शापः व्यर्थः न भवति। भवद्भ्यां राक्षसजन्म प्राप्तव्यम् एव। ततः मुक्तिं प्राप्तुं भवन्तौ अवकाशद्वयं

सूचयामि। सत्कार्याणि कृत्वा पुण्यं सम्पाद्य सर्वेषां प्रशंसावचनानि श्रुत्वा सप्तानां जन्मनाम् अनन्तरं शापविमोचनं प्राप्य मत्सान्निध्यं प्राप्स्यतः इति तु एकम्। परमदुष्टौ भूत्वा त्रिषु एव जन्मसु मत्सान्निध्यं प्राप्स्यतः इति अपरम्। अनयोः कः मार्गः इष्टः? विचार्य सूचनीयम्'' इति।

तदा जयविजयौ उक्तवन्तौ– ''देव! भवद्विरहेण सप्त जन्मानि यापयितुं न शक्नुवः। 'परमदुष्टौ प्रजाकण्टकौ' इति अपख्यातिः आगच्छतु नाम, तथापि त्रिषु एव जन्मसु शापविमोचनम् इच्छावः'' इति।

एतदनुगुणं तौ कृतयुगे हिरण्याक्ष-हिरण्यकशिपुरूपेण जन्म प्राप्तवन्तौ। त्रेतायुगे रावण-कुम्भकर्णरूपेण, द्वापरयुगे च शिशुपाल-दन्तवक्त्ररूपेण जन्म प्राप्य बहूनि दुष्टकार्याणि कृत्वा शापविमोचनं प्राप्य अन्ते विष्णोः सान्निध्यं प्राप्तवन्तौ।''

ग्रामज्येष्ठयोः ज्येष्ठः एतां कथां श्रावयित्वा उक्तवान्– ''एतवत्पर्यन्तं या कथा उक्ता सा भवद्भिः ज्ञाता एव। अनन्तरं कलेः अवतारः जातः। 'सर्वेषु अपि युगेषु मम युगम् एव श्रेष्ठम्' इति कलिपुरुषस्य भावना। महती कीर्तिः सम्पादनीया इति तस्य इच्छा। अतः सः विष्णुसमीपं गत्वा प्रार्थितवान्– ''जयविजयौ सर्वेषु युगेषु अवतारं कृतवन्तौ। तौ यद्यपि दुष्टकार्याणि कृतवन्तौ, तथापि भवदीयौ किल? अतः तयोः अवतारः मम युगे अपि भवेत्। एवं यदि न भवेत् तर्हि भवता पक्षपातः आचरितः भवेत्'' इति।





विष्णुः कालपुरुषस्य प्रार्थनाम् अङ्गीकृतवान्। विष्णोः अनुग्रहेण तौ जयविजयौ आवयोः गृहे जन्म प्राप्तवन्तौ। एतौ विष्णोः प्रीतिपात्रे । बहुधा पापाचरणं कृत्वा यावच्छीघ्रं महाविष्णोः सान्निध्यं प्राप्तुम् इच्छतः एतौ। विष्णुः एव एतौ अत्र प्रेषितवान्। वयं किं वा कर्तुं शक्नुमः? सर्वं सहनया सोढव्यम्। एतयोः विरोधं यदि आचरेम तर्हि विष्णुः निश्चयेन कुपितः भविष्यति। यदि भवन्तः विष्णोः अवकृपाम् अपि सोढुं सिद्धाः चेत् वदन्तु, एतत्क्षणे एव एतौ दण्डयिष्यामि। किन्तु अनन्तरकाले काऽपि हानिः जाता चेत् परिहारेच्छया आवयोः समीपं न आगन्तव्यम्। इदानीं किं करणीयम् इति भवन्तः एव वदन्तु" इति।

"जयविजययोः अवतारभूतौ एतौ विरुध्य कथं वा व्यवहरेम? एतयोः मुक्त्यर्थं महाविष्णुः एव अत्र आगमिष्यति। तावत् अस्माभिः सर्वं मौनं सोढव्यम्" इति ग्रामीणाः सर्वे एककण्ठेन उक्तवन्तः।

एतादृशे विशिष्टे शतानन्दवनग्रामे ग्रामज्येष्ठयोः पुत्रयोः व्यवहारम् आक्षेप्तुम् अपि कोऽपि न आसीत्। सर्वे तयोः पीडां विना विरोधं सहन्ते स्म। क्रमशः एतादृशं जीवनम् एव ग्रामे सहजं जातम्। ग्रामीणाः ग्रामज्येष्ठयोः ज्येष्ठं पुत्रं जय इति द्वितीयं च विजय इति आहूतवन्तः।

जयविजयौ दुष्टकार्याणि आचरन्तौ विंशतिवर्षीयौ जातौ। इदानीम् अपि तयोः दुष्टव्यवहारस्य न काऽपि च्युतिः। एवं स्थिते एकदा अन्यदेशीयः कश्चित् तं ग्रामं प्रविष्टवान्। सः विंशतिवर्षीयः सुदृढकायः। कान्तियुता शरीरच्छाया तस्य। उन्नतं रमणीयं च शरीरम्। मुखे अपूर्वं तेजः। प्रथमदर्शनेन एव कश्चित् राजवंशीयः इव दृश्यते स्म सः।

अन्यदेशीयः सः ग्रामं प्रविश्य वृक्षस्य छायायाम् उपविष्टवान्। सुदूरप्रयाणेन श्रान्तः सः किञ्चित्कालं यावत् विश्रान्तिसुखम् अनुभूतवान्। अनन्तरं तेन मार्गेण गच्छन्तं दानेशं सः पृष्टवान्– "भोः, एकं दिनं यावत् भवतः गृहे स्थातुम् अवकाशः लभ्येत वा?" इति।

सम्भ्रान्तः दानेशः– "अहं किमिति

वदामि? एतद्विषयं ग्रामज्येष्ठौ मया प्रष्टव्यौ" इति उक्तवान्।

आश्चर्यचकितः अन्यदेशीयः ततः उत्थाय अग्रे गतवान्। तदा नदीतः जलम् स्वीकृत्य आगच्छन्ती काचित् स्त्री पुरतः आगता। अन्यदेशीयः तां पृष्टवान्– "मातः! अतीव पिपासितः अस्मि। किञ्चित् जलं ददाति वा?" इति।

सा अपि भीता सती– "अहं किमपि न जानामि। ग्रामज्येष्ठौ पृष्ट्वा उत्तरं वक्तव्यम्" इति उक्त्वा त्वरया ततः गतवती।

तदनन्तरं सः अन्यदेशीयः मार्गे मिलितैः बहुभिः सह सम्भाषणं कृतवान्। यं कमपि यत्किमपि पृच्छतु, सः वदति– 'ग्रामज्येष्ठौ प्रष्टव्यौ' इति। 'किम् एतत् विचित्रम्!' इति आश्चर्यम् अनुभवन् अन्यदेशीयः ग्रामे सर्वत्र अटितवान्।

एवम् अटनसमये कस्माच्चित् गृहतः रोदनध्वनिः श्रुतः। कारणं ज्ञातुम् इच्छन् सः अन्यदेशीयः तत् गृहं प्रविष्टवान्।

तत्र कटे दशवर्षीयः कश्चन बालकः शयितः आसीत्। तं परितः दशाधिकाः ज्येष्ठाः उपविश्य रोदनं कुर्वन्तः आसन्।

विदेशीयः तान् दृष्ट्वा– "किं जातम्? किमर्थम् एवं रोदनं कुर्वन्ति भवन्तः?" इति पृष्टवान्।

तं प्रश्नं श्रुत्वा सर्वे तम् आगन्तुक दृष्टवन्तः। तेषु अन्यतमः सम्भ्रान्तस्वरेण– "भवान् अन्यदेशीयः खलु? ग्रामज्येष्ठयोः अनुमतिं विना भवते किमपि न वदामः वयम्" इति उक्तवान्।



विदेशीयः तस्य वचनम् अगणयन् अग्रे गत्वा कटे सुप्तस्य बालकस्य समीपे उपविष्टवान्। बालकस्य नाडीं क्षणकालं परीक्ष्य– "किमर्थम् एवं महोत्पाते सञ्जाते इव रोदनं कुर्वन्ति? भीतिः मास्तु। बालकस्य प्राणापायः कोऽपि नास्ति। औषधदानेन अहम् एतस्य रोगं निवारयिष्यामि" इति उक्तवान्।

तदा तत्रत्या काचित् स्त्री भीत्या– "अस्माभिः कृतानां पापानां कारणतः एषः निश्चयेन मरणं प्राप्स्यति। अस्माकं ग्रामज्येष्ठस्य औषधोपचारेण अपि एषः रोगात् मुक्तः न जातः। एवं स्थिते अन्यस्य औषधेन एषः कथं जीवेत्? अन्यस्य औषधोपचारेण न केवलं मरणम्, अपि तु नरकप्राप्तिः अपि। अतः इदानीं किमपि मास्तु" इति रुदती उक्तवती।

विदेशीयस्य चिकित्सार्थं तैः कथञ्चित् अपि अनुमतिः न दत्ता। अन्ते खिन्नः विदेशीयः– "भवन्तः अङ्गीकुर्वन्तु वा मा वा, अहं तु चिकित्सां करोमि एव। मम पुरतः एव कस्यचित् अपि प्राणानां निर्गमनम् अहं द्रष्टुं न शक्नोमि। अहं योग्यम् औषधोपचारं करोमि एव" इति उक्तवान्।

"एतत् सर्वथा न शक्यते। वयं न अङ्गीकुर्मः" इति एककण्ठेन उक्तवन्तः ग्रामीणाः।

तदा विदेशीयः अपि हठस्वरेण उक्तवान्– "अहम् अपि पश्यामि – चिकित्सातः मां कथं निवारयन्ति इति। एवम् औषधोपचारः निवारणीयः इति भवतां ग्रामज्येष्ठयोः आदेशः तु नास्ति किल?" इति।

इदानीं ते ग्रामीणाः सन्देहे पतिताः। 'अन्यद्वारा चिकित्सा न कारणीया इति तु ग्रामज्येष्ठेन उक्तम्। किन्तु औषधोपचारं कर्तुम् उद्युक्तः निवारणीयः वा न वा इति तु तेन न उक्तम्' इति हि तेषां समस्या। "वयम् एतत्क्षणे एव ग्रामज्येष्ठयोः अभिप्रायं प्राप्नुयाम" इति चिन्तयन्तः ते उभौ ग्रामज्येष्ठयोः समीपं प्रेषितवन्तः।

(अनुवर्तते)



# प्रकृतिवैचित्र्याणि

## पिरन्हा

दक्षिण-अमेरिकाप्रदेशस्थासु नदीषु १६ विधाः पिरन्हा जलचराः सन्ति। किन्तु तेषु चतुर्विधाः केवलम् अपायकारिणः। एते जलचराः सहस्रशः समूहरूपेण तरन्तः सञ्चरन्ति।



## अत्यधिकः वृष्टिपातः!



हवायिदेशस्य वायु अले अले पर्वतप्रान्ते वर्षे ३३५ दिनानि यावत् वृष्टिः एव। प्रतिवर्षम् अत्र सामान्यतः ४८६.१ फुट् मिता वृष्टिः भवति।

## रुधिरोद्गारिणी नेत्रे!

अमेरिकादेशीयः गोड्गुरुजातीयः मण्डूकः यदा अपेक्षितं तदा नेत्रतः रक्तं निस्सारयितुं शक्नोति। शिरोभागे रक्तपरिचलनं वर्धयित्वा नेत्रस्थाः अल्पनाडीः भञ्जयित्वा एष प्राणी एवं रक्तं निस्सारयति। 'आत्मरक्षणार्थम् एष एवम् आचरति' इति भावयन्ति प्राणिशास्त्रज्ञाः।



# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अपख्यातिः – | Disrepute | परिविष्टः – | Served |
| अपत्यम् – | A child | पिधानम् – | Closing |
| अभिमुखम् – | In front | भषति – | Barks |
| अवरः – | Lowlier | भ्रामकम् – | Illusory |
| अवान्तरभागः – | Sub-division | मण्डूकः – | Frog |
| आपृच्छनम् – | Send off | मानवता – | Humanism |
| उड्डायितवान् – | Hoisted | मुकुटम् – | Crown |
| कोणः – | Corner | मेषः – | Sheep |
| कौमुदी – | Moonlight | वराहः – | Pig |
| दुकूलम् – | Bark garment | वाटिका – | Orchard |
| धीवरः – | Fisherman | वातायनम् – | Window |
| धृष्टः – | Rude | विद्धवान् – | Thrashed |
| नवनीतम् – | Butter | व्याधः – | Hunter |
| नाविकः – | Navigator | शुनकः – | Dog |
| निस्सन्तानः – | Childless | श्वश्रूः – | Mother-in-law |
| नेतारः – | Leaders | श्वासकासः – | Breath-cough |
| पटमण्डपः – | Tent | सुखान्तम् – | Comic ending |
| परपुष्टम् – | Parasite | सूच्यरूपेण – | Indicatively |

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

विजितां शीर्षिकां जुलै-८७ मासे प्रकटयिष्यामः।





*उपरितनं चित्रद्वय पश्यन्तु। *यक्ता शीर्षिका परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा मे-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धाया विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

## 'मार्च' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–

प्रथमचित्रम् - **सङ्ख्यासु प्रथमा श्रेष्ठा।**

द्वितीयचित्रम् - **अस्मासु नाहं बलिष्ठः?**

प्रेषकः– ब्र. हरीशानन्दः, गीतामन्दिरम्, डि. ४७/९.७, मिश्र पोखरा, वाराणसी (उ.प्र.)

# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ३०.००

**डाल्टन् एजन्सीस्**, चन्दमामा बिल्डिङ्गस्, वडपळनी, मद्रास-६०००२६

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु-

**चन्दमामा पब्लिकेषन्स्**, चन्दमामा बिल्डिङ्गस्, वडपळनी, मद्रास्-६०००२६.

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

---

# मातामहस्य गृहं गच्छामि

| | |
|---|---|
| हरि: – परीक्षा समाप्ता किल? ग्रीष्मविरामे क: कार्यक्रम: भवत:? | Examinations are over? What are your plans for the summer vacation? |
| रवि: – अस्मिन् विरामे मम मातामहस्य गृहं गच्छामि। | This summer I am going to my grandmother's place. |
| ह – कदा प्रत्यागमनम्? | When will you be coming back? |
| र – यदा महाविद्यालयस्य पुनरारम्भ: तदा। | When the colleges reopen. |
| ह – तादृशं किम् अस्ति तत्र? न चलनचित्रमन्दिराणि, न वा विपणि:। | What could be of interest in a village? What is there? Neither a cinema theatre nor a market! |
| र – भवान् ग्रामजीवनस्य स्वादं न आस्वादितवान्। अत: एवं पृच्छति। ग्रामे नगरेषु अविद्यमाना शान्ति: अस्ति। मञ्जुला नदी, श्यामला भूमि:, रमणीया प्रकृति:, स्नेहशीला: निष्कपटिन: च जना: सन्ति। विशाल: दिगन्त: अस्ति। | You haven't had the experience of the mirthful village life, that's why you say that. We have a peaceful atmosphere in the village whereas you have no peace of mind at all in the city. Soft-flowing rivers, green pastures, enchanting nature and lovable and honest people could be found in villages. You have the wide horizon. |
| ह – तथापि दिनद्वये जामिता न भवेत् वा? | Still, doesn't one get bored after two days? |
| र – जामिता! गमनानन्तरदिने एव मातामही तैलाभ्यञ्जनं कारयति। तत: प्रतिदिनं विशेषखाद्यम्। मातामहस्य मुखत: स्वातन्त्र्यकालीनकथाश्रवणम्। प्रकृतौ विहार:। दिनानि कथं गच्छन्ति इत्येव न ज्ञायते। | Bored! eh! The day after I reach, grandmother gives me an oil-bath! I get special sweets everyday! Grandfather tells me stories of the freedom movement! And I move about amidst nature! One does not know how days go by! |

# Mighty as the sword!





## Make your mark...with
# APOLLO PENCILS

The space age pencils with
super bonded lead, that doesn't break
Available with attractive printed designs






**APOLLO PENCILS PVT LTD.,**
107, Regal Industrial Estate
Acharya Donde Marg, Sewree (West),
Bombay 400 015 Ph: 4133295/4133215